# SUBHÂSHITA-RATNA-BHÂNDÂGÂRAM.

OR

## GEMS OF SANSKRIT POETRY.

BEING

**A Collection of Witty, Epigrammatic, Instructive and Descriptive Verses.**

SELECTED AND ARRANGED

BY

KÂS'ÎNÂTH PÂṆDURANG PARAB.

THIRD THOROUGHLY REVISED AND ENLARGED EDITION.

( 2000 Copies. )

'Why are not more gems from our great authors scattered over the country? Great books are not in every body's reach, and though it is better to know them thoroughly than to know them only here and there, yet it is a good work to give a little to those who have neither time nor means to get more'—COLERIDGE.

'I have gathered a posie of other men's flowers, and nothing but the thread that is mine own'—MONTAIGUE.

AND PUBLISHED

मी,

॥ श्रीः ॥

# सुभाषितरत्नभाण्डागारम् ।

## प्रकरणम् १ ।

### मङ्गलाचरणप्रकरणम् ।

#### परब्रह्म ।

अथ स्वस्थाय देवाय नित्याय [1]हतपाप्मने। त्यक्त[2]क्रमविभागाय चैतन्यज्योतिषे नमः ॥१॥ दिक्काला[3]द्यैरनवच्छिन्नानन्तचिन्मात्रमूर्तये । स्वानुभूत्येक[4]मानाय नमः शान्ताय तेजसे ॥ २ ॥ मध्याह्नार्क[5]मरीचिकास्विव पयःपूरो यदज्ञानतः खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्य[6]मुन्मीलति । यत्तत्त्वं विदुषां नि[7]मीलति पुनः [8]स्रग्भोगिभोगोपमं [9]सान्द्रानन्दमुपास्महे तदमलं [10]स्वात्मावबोधं [11]महः ॥ ३ ॥ यस्माद्विश्वमुदेति यत्र रमते यस्मिन्पुनर्लीयते भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः । शान्तं शाश्वत[12]मक्रियं यम[13]पुनर्भावाय भूतेश्वरं द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥ ४ ॥ यः सृष्टिस्थितिसंहृतीर्वितनुते ब्रह्मादिमूर्तित्रिकैर्यस्याधीनतया स्थितानि सदसत्कर्माण्यपि प्राणिनाम् । नित्येच्छाकृतिबुद्धिमानथ परो जीवात्परात्मा स्वयं सोऽयं वो विदधातु पूर्णमचिराच्चेतोगतं यद्भवेत् ॥ ५ ॥ शक्यं यन्न विशेषतो निगदितुं प्रेम्णैव यच्चिन्तितं मृद्वङ्गीवदनेन्दुमण्डलमिव स्वान्ते विधत्ते [14]मुदम् । यन्मुग्धानयनान्तचेष्टितमिवा[15]ध्यक्षेऽपि नो लक्षितं तत्तेजो विनयाद[16]मन्दहृदयानन्दाय वन्दामहे ॥ ६ ॥ विश्वेशो वः स पायात्त्रि[17]गुणसचिवतां योऽवलम्ब्या[18]नुवारं विश्व[19]द्रीचीनसृष्टिस्थितिविलयमजः स्वेच्छया निर्मिमीते । यस्ये[20]यत्तामतीत्य प्रभवति महिमा कोऽपि लोक[21]व्यतीतस्त्यक्तो यश्चक्षुराद्यैरपि निपुणतमैर्वीक्षणादिक्रियासु ॥ ७ ॥

---

१ नाशितकिल्बिषाय. २ विधिः. ३ अविषयीकृता. ४ प्रमाणम्. ५ आकाशे दृश्यमानगलज्जलायमानरश्मिसमूहः. मृगतृष्णेति यावत्. ६ ब्रह्माभिन्नतया तत्त्वेन भ्रमविषयीभवति. ७ खवाय्वादिरूपतद्भिन्नत्वेन भ्रमाविषयीभवति. ८ भ्रमेण गृहीतो मालायां सर्पकाय इव. ९ निबिडानन्दस्वरूपम्. १० ब्रह्मात्मकज्ञानस्वरूपम्. ११ तेजः. १२ निश्चलम्. १३ पुनरुत्पत्त्यभावाय. १४ आनन्दम्. १५ समीपस्थेऽपि. १६ बहु. १७ सत्त्वरजस्तमःसहायताम्. १८ वारंवारम्. १९ चराचरनिष्ठम्. २० सीमाम्. २१ सकललोकातीतः.

## गणेशः ।

वन्दे [1]वन्दारुमन्दारमिन्दुभूषणनन्दनम् । अमन्दानन्दसंदोह[2]बन्धुरं [3]सिन्धुराननम् ॥ १ ॥ आलम्बे [4]जगदालम्बे हेरम्बचरणाम्बुजे । शुष्यन्ति यद्रजःस्पर्शात्सद्यः [5]प्रत्यूहवार्धयः ॥ २ ॥ गजाननाय महसे प्रत्यूहतिमिरच्छिदे । अपारकरुणापूरतरङ्गितदृशे नमः ॥ ३ ॥ नमस्तस्मै गणेशाय यत्कण्ठः [6]पुष्करायते । मदाभोगघ[7]नध्वानो नीलकण्ठस्य ताण्डवे ॥ ४ ॥ [8]अगजाननपद्मार्कं गजाननमहर्निशम् । [9]अनेकदं तं भक्तानामे[10]कदन्तमुपास्महे ॥ ५ ॥ चलत्कर्णानिलोद्धूतसिन्दूरारुणिताम्बरः । जयत्यकालेऽपि सृजन्संध्यामिव गजाननः ॥ ६ ॥ एकदन्तद्युतिसितः शंभोः सूनुः श्रियेऽस्तु वः । विद्याकन्द इवोद्भिन्ननवाङ्कुरमनोहरः ॥ ७ ॥ दुरितसमूहबलाहकपटलीसंहरणपवमानम् । शिवयोरङ्काभरणं वन्दे किंचिद्गजाननं तेजः ॥ ८ ॥ अविरलविगलन्मदजलकपोलपालीनिलीनमधुपकुलः । उद्भिन्ननवश्मश्रुश्रेणिरिव गणाधिपो जयति ॥ ९ ॥ एकरद [11]द्वैमातुर निस्त्रिगुण चतुर्भुजापि [12]पञ्चकर । जय षण्मुखनुत सप्तच्छदगन्धिमदा[13]ष्टतनुतनय ॥ १० ॥ मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम् । यद्दानतोयतरलैस्तिलतुलनालम्बि रोल[14]म्बैः ॥ ११ ॥ शिवयोः [15]सुधाहरिद्रादीप्तिमतोः सारभूज्जगत्पित्रोः । त्रिभुवनविघ्नध्वंसी करिकल्पः कश्चिदरुणिमा जयति ॥ १२ ॥ युगपत्स्वगण्डचुम्बनलोलौ[17] पितरौ निरीक्ष्य हेरम्बः । तन्मुखमेलनकुतुकी स्वाननमपनीय परिहसन्पायात् ॥ १३ ॥ हस्तपङ्कजनिविष्टमोदकव्याजसंचरदशेषपुमर्थम् । नौमि किंचिदवधूनितशुण्डादण्डकुण्डलितमण्डितगण्डम् ॥ १४ ॥ [18]अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् । तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥ १५ ॥ अशेषविघ्नप्रतिषेधदक्षमन्त्राक्षतानामिव दिङ्मुखेषु । विक्षेपलीला करशीकराणां करोतु वः प्रीतिमिभाननस्य ॥ १६ ॥ दन्ताग्रनिर्भिन्नहिमाचलोर्वीरन्ध्रोत्थिताहीन्द्रमणिप्रभौघे । नागाननः स्तम्भधिया कपोलौ घर्षन्पितृभ्यां हसितः पुनातु ॥ १७ ॥ [19]दन्ताञ्चलेन धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् । [20]उल्लाघनोत्फणफणाधरगीयमानक्रीडावदानमिभराजमुखं नमामः ॥ १८ ॥ आनन्दमात्रमकरन्दमनन्तगन्धं योगीन्द्रसुस्थिरमिलिन्दमपास्तबन्धम् । वेदान्तसूर्यकिरणैकविकासशीलं हेरम्बपादशरदम्बुजमानतोऽस्मि ॥ १९ ॥ गण्डस्थलीगलदमन्दमदप्रवाहमाद्यद्द्विरेफमधुरस्वरदत्तकर्णः । हर्षादिवालसनिमीलितनेत्रयुग्मो विघ्नच्छिदे भवतु भूतपतिर्गणेशः ॥ २० ॥ लक्ष्मीं तनोतु सुतरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।

---

१ भक्तजनकल्पवृक्षम्. २ सुन्दरम्. ३ गजाननम्. ४ जगदाधारभूते. ५ विघ्नसमुद्राः. ६ मृदङ्गवदाचरति. ७ निबिडध्वनिः. ८ पार्वती. ९ मोक्षाद्यनेकवस्तुदातारम्. १० गणेशम्. ११ पार्वतीगङ्गारूपमातृद्वयवत्त्वादित्यर्थः. १२ शुण्डामादाय पञ्चकरत्वमित्यर्थः. १३ महादेवः. १४ भ्रमरैः. १५ चूर्णम्. १६ हस्तितुल्य. १७ लुब्धौ. १८ विघ्नः. १९ दन्ताग्रेण. २० हर्षित.

हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं विघ्नाद्रिभेदशतधारधुरंधरं नः ॥ २१ ॥ अविरलमदधाराधौतकुम्भः शरण्यः फणिवरवृतगात्रः सिद्धसाध्यादिवन्द्यः । त्रिभुवनजनविघ्नध्वान्तविध्वंसदक्षो वितरतु गजवक्त्रः संततं मङ्गलं वः ॥ २२ ॥ जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलिं बध्नता स्रष्टुं वारिभवोद्भवेन भुवनं शेषेण धर्तुं धराम् । पार्वत्या महिषासुरप्रमथने सिद्धाधिपैः सिद्धये ध्यातः पञ्चशरेण विश्वजितये पायात्स नागाननः ॥ २३ ॥ विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यवाड्विघ्नव्यालकुलाभिमानगरुडो विघ्नेभपञ्चाननः । विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाम्बुधौ वाडवो विघ्नाघौघघनप्रचण्डपवनो विघ्नेश्वरः पातु वः ॥ २४ ॥ उच्चैर्ब्रह्माण्डखण्डद्वितयसहचरं कुम्भयुग्मं दधानः प्रेङ्खन्नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामः । देवः शंभोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्तस्त्रैलोक्याश्चर्यमूर्तिः स जयति जगतामीश्वरः कुञ्जरास्यः ॥ २५ ॥ दोर्द्योतद्दन्तखण्डः सकलसुरगणाडम्बरेषु प्रचण्डः सिन्दूराकीर्णगण्डः प्रकटितविलसच्चारुचान्द्रीयखण्डः । गण्डस्थानन्तषण्डः स्मरहरतनयः कुण्डलीभूतशुण्डो विघ्नानां कालदण्डः स भवतु भवतां भूतये वक्रतुण्डः ॥ २६ ॥ विघ्नेशो वः स पायाद्विहृतिषु जलधीन्यः करांग्रेण पीत्वा तस्मिन्नुद्धृत्य विश्वं विसृजति सकलं दृश्यते व्योम्नि देवैः । क्वापीशः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः क्व च श्रीः क्वाप्यौर्वः क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्रादिचक्रम् ॥ २७ ॥ विघ्नेशः सर्वविघ्नान्परिहरतु स यत्कर्णतालादुदञ्चद्वायुव्याधूतगण्डस्थलयुगलगलद्भूरिसिन्दूरपूरैः । आरुण्याद्वैतभावं गतवति जगति क्वापि नो भाति भानुर्नैवासौ शीतभानुः क्वचिदपि नितरां भासते वा कृशानुः ॥२८॥ क्रोडं तातस्य गच्छन्विशदबिसधिया शावकं शीतभानोराकर्षन्भालवैश्वानरनिशितशिखारोचिषा तप्यमानः । गङ्गाम्भः पातुमिच्छुर्भुजगपतिफणाफूत्कृतैर्दूयमानो मात्रा संबोध्य नीतो दुरितमपनयेद्बालवेषो गणेशः ॥ २९ ॥ उच्चैरुत्तालगण्डस्थलबहुलगलद्दानपानप्रमत्तस्फीतालिव्रातगीतिश्रुतिविधृतिकलोन्मीलिताधाक्षिपक्ष्मा । भक्तप्रत्यूहपृथ्वीरुहनिवहसमुन्मूलनोच्चैरुदञ्चच्छुण्डादण्डाग्र उग्रार्भक इभवदनो वः स पायादपायात् ॥ ३० ॥ कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमालाखेलद्रोलम्बकोलाहलमुखरितदिक्चक्रवालान्तरालम् । प्रत्नं वेतण्डरत्नं सततपरिचलत्कर्णतालप्ररोहद्वाताङ्कूराजिहीर्षादरविवृतफणाशृङ्गभूषाभुजंगम् ॥ ३१ ॥ यः सिन्धौ फेनराशिर्भुवि कुमुदवनं व्योम्नि नक्षत्रलक्ष्मीरब्धौ मुक्तासमूहस्तरुषु सुमनसो मानसे हंससंघः । श्रीकण्ठे भूतिलेशः शिखरिषु मणयो दिक्षु नीहारपातः पाण्डुः शुण्डाग्रजन्मा जयति गणपतेः शीकराणां विलासः ॥ ३२ ॥ सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमा-

---

१ अधीनम्. २ वज्रम्. ३ अग्निः. ४ तुल्यम्. ५ आधुन्वन्. ६ गरुडः. ७ प्रतिस्पर्धि. ८ शुण्डादण्डः. ९ भ्रमरः. १० शुण्डाग्रेण. ११ शेष. १२ वाडवः. १३ बहु. १४ भ्रमरसमुदायः. १५ वृक्षः. १६ गण्डस्थलम्. १७ मदोदकसरित्. १८ पुरातनम्. १९ गजश्रेष्ठः. २० ईषत्. २१ अग्रभाग.. २१ हिमम्. २२ मृदङ्गः.

र्बर्हि[1]त्रा[2]सान्नासाग्ररन्ध्रं विशति फणिपतौ भोगे[3]संकोचभाजि । गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे[4] शूलपाणेर्वैनायक्यश्चिरं वो वदनविधु[5]तयः पान्तु चीत्कारवत्यः ॥ ३३ ॥

---

## सरस्वती ।

धातुश्चतुर्मुखीकण्ठशृङ्गाटक[6]विहारिणीम् । नित्यं प्रगल्भवाचालामुपतिष्ठे सरस्वतीम् ॥ १ ॥ सूक्ष्माय शुचये तस्मै नमो वाक्तत्त्वतन्तवे । विचित्रो यस्य विन्यासो विदधाति जगत्पटम् ॥ २ ॥ तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे । यत्प्रसादात्प्रलीयन्ते मोहान्धतमसश्छटा[7]ः ॥ ३ ॥ पातु वो निकषग्रावा[8] मतिहेम्नः सरस्वती । प्राज्ञेतरपरिच्छेदं[9] वचसैव करोति या ॥ ४ ॥ शारदा शारदाम्भोजवदना वदनाम्बुजे । सर्वदा[10] सर्वदास्माकं संनिधिं संनिधिं[11] क्रियात् ॥ ५ ॥ करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः । पश्यन्ति सूक्ष्ममतयः[12] सा जयति सरस्वती देवी ॥ ६ ॥ शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् । करुणामसृणैः[13] कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥ ७ ॥ आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् । मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥ ८ ॥ वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव । मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सम्प्रसादास्तु सरस्वती वः ॥ ९ ॥ ज्योतिस्तमोहरमलोचनगोचरं तज्जिह्वादुरासदरसं मधुनः प्रवाहम् । दूरे त्वचः पुलकबन्धि परं प्रपद्ये सारस्वतं किमपि कामदुघं रहस्यम् ॥ १० ॥ तव करकमलस्थां स्फाटिकी[14]मक्षमालां[15] नखकिरणविभिन्नां[16] दाडिमीबीजबुद्ध्या । प्रतिकलम्[17]नुकर्षन्येन कीरो[18] निषिद्धः स भवतु मम भूत्यै[19] वाणि ते मन्दहासः ॥ ११ ॥ तमोगण[20]विनाशिनी सकलकालमुद्द्योतिनी धरातलविहारिणी जडसमाज[21]विद्वेषिणी । कलानिधि[22]सहायिनी लसदलोलसौदामिनी मदन्तरवलम्बिनी भवतु कापि कादम्बिनी[23] ॥ १२ ॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ १३ ॥

---

## शिवः ।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे । त्रैलोक्यनगरारम्भमूलस्तम्भाय शंभवे ॥ १ ॥

---

१ मयूरः. २ भयात्. ३ फणा. ४ नृत्ये ५ चालनम्. ६ चतुष्पथम्. ७ समूहः. ८ स्वर्णादिपरीक्षणशिला. ९ पण्डितमूर्खयोर्भेदम्. १० सर्वदात्री. ११ उत्तमनिधिम्. १२ कुशाग्रबुद्धयः. १३ स्निग्धम्. १४ स्फटिकमयीम्. १५ जपमालाम्. १६ मिश्राम्. १७ प्रतिक्षणम्. १८ शुकः. १९ समृद्ध्यै. २० अज्ञानम्; (पक्षे) अन्धकारः. २१ मन्दबुद्धिः; (पक्षे डलयोः सावर्ण्यात्) जलम्. २२ विद्वज्जन; (पक्षे) चन्द्रः. २३ सरस्वती; (पक्षे) मेघमाला.

वामाङ्गीकृत[1]वामाङ्गि कुण्डलीकृत[2]कुण्डलि । आविरस्तु पुरो वस्तु भूतिभू[3]त्यम्बराम्बरम् ॥ २ ॥ निर्[4]उपादानसं[5]भारमभित्तावेव तन्वते । जगच्[6]चित्रं नमस्तस्मै [7]कलाश्लाघ्याय शूलिने ॥ ३ ॥ चन्द्राननार्धदेहाय चन्द्रांशुसितमूर्तये । चन्द्रार्कानलनेत्राय चन्द्रार्धशिरसे नमः ॥ ४ ॥ भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः । जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥ ५ ॥ पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता । पवर्गरचिता मूर्तिर[8]पवर्गप्रदास्तु वः ॥ ६ ॥ संसेवितभृगुतुङ्गं विद्योतितवेदवेदाङ्गम् । परिनर्तितभयरङ्गं मनसिजभङ्गं समाश्रये लिङ्गम् ॥ ७ ॥ स जयति हिमकरलेखा चकास्ति यस्योमयोत्सुकान्निहिता । नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ॥ ८ ॥ [9]पाणिग्रहे [10]पुलकितं वपुरैशं [11]भूतिभूषितं जयति । अङ्कुरित इव [12]मनोभूर्यस्मिन्भस्मावशेषोऽपि ॥ ९ ॥ मा वम संवृणु विपमिदमिति सातङ्कं पितामहेनोक्तः । प्रातर्जयति सलज्जः कज्जलमलिनाधरः शंभुः ॥ १० ॥ जयति प्रियापदान्ते गरलग्रैवे[13]यकः स्मराराति‍ः । विष[14]मविशिखे विशन्निव शरणं गलबद्धकरवालः ॥ ११ ॥ संध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् । गौरीमुखार्पितमना विजयाहसितः शिवो जयति ॥ १२ ॥ प्रणयकुपितप्रियापदलाक्षासंध्या[15]नुबन्धमधुरेन्दुः । तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति ॥ १३ ॥ अहिभूषणोऽप्यभयदः सुकलितहालाहलोऽपि यो नित्यः । दिग्वसनोऽप्यखिलेशस्तं शशधरशेखरं वन्दे ॥ १४ ॥ जयति जटाकि[16]ञ्जल्कं गङ्गामधु मुण्डवलयबीजमयम् । गलगरलपङ्कसंभवमम्भोरुहमाननं शंभोः ॥ १५ ॥ प्रतिबिम्बितगौरीमुखविलोकनोत्कम्पशिथिलकरगलितः । स्वेदभरपूर्यमाणः शंभोः सलिलाञ्जलिर्जयति ॥ १६ ॥ [17]आदाय चाप[18]मचलं कृत्वाहीनं[19] गुणं विषम[20]दृष्टिः । यश्चित्र[21]मच्युतशरो लक्ष्य[22]मभाङ्क्षी[23]न्नमस्तस्मै ॥ १७ ॥ [24]उपहरणं विभवानां संहरणं सकलदुरितजालस्य । उद्धरणं संसाराच्चरणं वः श्रेयसेऽस्तु विश्वपतेः ॥ १८ ॥ भिक्षुकोऽपि सकलेप्सितदाता प्रेतभूमिनिलयोऽपि पवित्रः । भूतमित्रमपि योऽभयसत्री तं विचित्रचरितं शिवमीडे ॥ १९ ॥ पाणिग्रहे पर्वतराजपुत्र्याः पादाम्बुजं पाणिसरोरुहाभ्याम् । अश्मानमारोपयतः स्मरारेर्मन्दस्मितं मङ्गलमातनोतु ॥ २० ॥ पार्श्वस्थपृथ्वीधरराजकन्याप्रकोपविस्[25]फूर्जथुकातरस्य । नमोऽस्तु ते मात-

---

१ स्त्री. २ सर्पः. ३ दिगम्बरम्. ४ उपकरणम्; (पक्षे) तूलिकादिकम्. ५ संपत्तिः; (पक्षे) समूहः. ६ नानाकारम्; (पक्षे) आलेख्यम्. ७ चन्द्रकला; (पक्षे) आलेख्यक्रियाकौशलम्. ८ मोक्षः. ९ परिणये. १० संजातपुलकम्. ११ भस्मना शोभितम्. १२ मदनः. १३ कण्ठभूषा. १४ मदने. १५ आरम्भः. १६ केसरः. १७ त्रिलोचनो हिमाचल धनु, वासुकि ज्याम्, विष्णुं शरं च विधाय त्रिपुरासुरं जघानेति प्रकृतोऽर्थः. चलनशून्यं धनु', अहीनो धनुर्दण्डादन्यूनो गुणः, विषमा लक्ष्यादन्यत्र निहिता दृष्टिः, न च्युतः शरो यस्य तथाविधः, तथापि लक्ष्यभङ्ग इति विरोधाभासः. १८ स्थिरम्; (पक्षे) पर्वतम्. १९ गुणरहितम्; (पक्षे) अहीनमिति पदच्छेदः. सर्पराजं गुणं कृत्वेत्यर्थः. २० असमदृक्; (पक्षे) त्रिलोचनत्वाद्विषमदृष्टिः. २१ न च्युतः शरो यस्य; (पक्षे) अच्युतो विष्णुः स एव शरो यस्य. २२ शरव्यम्. त्रिपुरमित्यर्थः. २३ बभञ्ज. २४ दातारम्. २५ वज्रनिर्घोषः.

रिति प्रणामाः शिवस्य संध्याविषया जयन्ति ॥ २१ ॥ क्व तिष्ठतस्ते पितरौ ममेवेत्यपर्णयोक्ते परिहासपूर्वम् । क्व वा ममेव श्वशुरौ तवेति तामीरयन्सस्मितमीश्वरोऽव्यात् ॥ २२ ॥ वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि दृष्ट्वा दशाननसमागमनभ्रमेण । भूयोऽपि शैलपरिवृत्तिभयेन गाढमालिङ्गितो गिरिजया गिरिशः पुनातु ॥ २३ ॥ संध्यानतौ नरपुरंध्रितनोः सरोषमुत्सारिते गिरिजया निजपाणिपद्मे । उत्सर्पिकङ्कणफणीन्द्रफणार्पणेन पूर्णोऽञ्जलिर्जयति बालमृगाङ्कमौलेः ॥ २४ ॥ यस्याहुरागमविदः परिपूर्णशक्तेरंशे कियत्यपि निविष्टममुं प्रपञ्चम् । तस्मै तमालरुचिभासुरकंधराय नारायणीसहचराय नमः शिवाय ॥ २५ ॥ कुसुमशरविलासे भङ्गुरस्याद्रिपुत्रीकरतलवलयस्य क्ष्मागतस्यार्धमेकम् । निजमिव शशिखण्डं याचमानस्य शंभोर्भवतु सह विवादः कान्तया कौतुकाय ॥ २६ ॥ कथयत कथमेषा मेनया विप्रदत्ता शिव शिव गिरिपुत्री वृद्धकापालिकाय । इति वदति पुरंध्रीमण्डले सिद्धिलेशव्ययकृतवरवेषः पातु वः श्रीमहेशः ॥ २७ ॥ अरुणनयनं सभ्रूभङ्गं दरस्फुरिताधरं सुतनु शशिनः क्लिष्टां कान्तिं करोतु तवाननम् । कृतमनुनयैः कोपोऽयं ते मनस्विनि वर्धतामिति गदितयाश्लिष्टो देव्या शिवाय शिवोऽस्तु वः ॥ २८ ॥ प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मितस्त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् । नमितशिरसो गङ्गालोके तया चरणाहताववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥ २९ ॥ कस्त्वं शूली[1] मृगय भिषजं[2] नीलकण्ठः[3] प्रियेऽहं केकामेकां[4] कुरु पशुपतिर्नैव दृश्ये विषाणे[5] । स्थाणुर्मुग्धे[6] न वदति तरुर्जीवितेशः शिवाया[7] गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥ ३० ॥ वन्दे देवं जलधिशरधिं[8] देवतासार्वभौमं व्यासप्रष्ठा[9] भुवनविदिता यस्य वाहाधिवाहाः[10] । भूषापेटी[11] भुवनमधरं[12] पुष्करं[13] पुष्पवाटी[14] शाटीपालाः[15] शतमखमुखाश्चन्दनद्रुर्मनोभूः[16][17] ॥ ३१ ॥ च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं द्वयं चैकीकृत्य प्रहसितमुखी शैलतनया । अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा स च क्रीडाचन्द्रो दशनकिरणैः पूरिततनुः ॥ ३२ ॥ नमस्तुभ्यं देवासुरमुकुटमाणिक्यकिरणप्रणालीसंभेदस्नपितचरणाय स्मरजिते । महाकल्पस्वाहाकृतभुवनचक्रेऽपि नयने निरोद्धुं भूयस्तत्प्रसरमिव कामं हुतवते ॥ ३३ ॥ असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विश्रम्भेष्वपि च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात्कपटबटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ ३४ ॥ सहस्रास्यो नागः प्रभुरपि मतः पञ्चवदनः षडास्यो हन्तैकस्तनय इतरो वारणमुखः । सदा भैक्ष्यं शश्व-

---

१ त्रिशूली; (पक्षे) शूलरोगवान्. २ वैद्यम्. ३ शिवः; (पक्षे) मयूरः. ४ मयूरवाणी. ५ शृङ्गे. ६ शिवः; (पक्षे) छिन्नवृक्षप्रकाण्डम्. ७ पार्वत्याः; (पक्षे) क्रोष्ट्र्याः. ८ त्रिपुरसंहारे शरीकृतस्य विष्णोर्विश्रान्तिस्थानत्वात् ९ व्यासप्रमुखाः. १० वाहनानां वेदानामित्यर्थ. अधिवाहा वाहनाधिकृताः. ११ सर्पभूषणत्वादित्यर्थः. १२ पातालम्. १३ आकाशम्. १४ पुष्पस्थानीयचन्द्रोद्गमाधारत्वात्. १५ दिगम्बरत्वेन दिशामेव शाटीरूपत्वात् १६ इन्द्रादयो दिक्पाला इत्यर्थः. १७ चन्दनस्थानीयभस्मसबन्धित्वात्. मदनभस्मना शिवस्याङ्गानामनुलेपनस्य प्रसिद्धेः १८ ओघः.

त्प्रभवतु कथं वर्तनमिति श्वसन्त्यां पार्वत्यामथ जयति शंभुः स्मितमुखः ॥ ३५ ॥ मौनादस्तमितैव चाटुभणितिः स्वस्यैकहस्ताद्गतं दूरेऽप्यञ्जलिबन्धनं प्रणमनं स्तब्धार्धमूर्ध्नः कुतः । इत्थं संघटितैकविग्रहतया व्यग्रो गिरिग्रामणीजायां जातरुषं जयत्यनुनयन्देवस्त्रिलोकीगुरुः ॥ ३६ ॥ यस्मिन्बुद्बुदसंकरा इव बहु ब्रह्माण्डखण्डाः क्वचिद्भान्ति क्वापि च सीकरा इव विरिञ्च्याद्याः स्फुरन्ति भ्रमात् । चिद्रूपा लहरीव विश्वजननी शक्तिः क्वचिद्द्योतते स्वानन्दामृतनिर्भरं शिवमहापाथोनिधिं तं नुमः ॥ ३७ ॥ कल्पान्ते शमितत्रिविक्रममहाकङ्कालबद्धस्फुरच्छेषस्यूतनृसिंहपाणिनखरप्रोतादिकोलामिषः । विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ कर्षन्धीवरतां गतः स्यतु सतां मोहं महाभैरवः ॥ ३८ ॥ भीतिर्नास्ति भुजंगपुंगवविषात्प्रीतिर्न चन्द्रामृतान्नाशौचं हि कपालदामलुलनाच्छौचं न गङ्गाजलात् । नोद्वेगश्चितिभस्मना न च सुखं गौरीस्तनालिङ्गनादात्मारामतया हिताहितसमः स्वस्थो हरः पातु वः ॥ ३९ ॥ वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः । अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ ४० ॥ आनन्दश्लथिताः समाधिषु मुखे गौर्या विलासोल्लसाः संभ्रान्ताः क्षणमुद्गताः क्षणमथ स्मेरा निजे वैकृते । क्रूराः कृष्टशरासने मनसिजे दग्धे घृणाकूणितास्तत्कान्तारुदितेऽश्रुपूरतरलाः शंभोर्दृशः पान्तु वः ॥ ४१ ॥ स्वर्भानुः सुरवर्त्मनानुसरति ग्रासाभिलाषादसाविन्दोरिन्दुमुखि ग्रसेत किमुत भ्रान्त्या भवत्या मुखम् । इत्थं नाथगिरा नभोर्पितदृशो वक्त्रे भवान्या भृशं मानिन्याः कृतचुम्बनस्त्रिनयनः स्तादिष्टसिद्ध्यै सताम् ॥ ४२ ॥ विष्णोश्चागमनं निशम्य सहसा कृत्वा फणीन्द्रं गुणं कौपीनं परिधाय चर्म करिणः शंभुः पुरो धावति । दृष्ट्वा विष्णुरथं सकम्पहृदयः सर्पोऽपतद्भूतले कृत्तिर्विस्खलिता ह्रियानतमुखो नग्नो हरः पातु वः ॥ ४३ ॥ भस्मान्धोरगफूत्कृतिस्फुटभवद्भालस्थवैश्वानरज्वालास्विन्नसुधांशुमण्डलगलत्पीयूषधारारसैः । संजीवद्गजचर्मगर्जितभयभ्राम्यद्वृषाकर्षणव्यासक्तः सहसाद्रिजोपहसितो नग्नो हरः पातु वः ॥ ४४ ॥ एकोऽन्ते द्विसमस्त्रिलोचन इति ख्यातश्चतुर्भिः स्तुतो वेदैः पञ्चमुखः षडाननपिता सप्तर्षिभिर्वन्दितः । अष्टाङ्गो नवतुल्य आमरगणे वासो दशाशा दधत्स्वश्चैकादश सोऽवतान्न विजितो यो द्वादशात्मांशुभिः ॥ ४५ ॥ लीलाद्यूतजितां कलाधरकलां मौलौ दृढं कीलितां स्वीकर्तुं युगमुन्नमय्य भुजयोर्विश्लेषयन्त्यास्तदा । पार्वत्याः कुचकुम्भपार्श्वयुगले सप्रेमदत्तेक्षणः कौलक्षेपणमिन्दुमोचनविधौ देवः स नो रक्षतु ॥ ४६ ॥ भूत्यालेपनभूषितः प्रविलसन्नेत्राग्निदीपाङ्कुरः कण्ठे पन्नगपुष्पदामसुभगो गङ्गाजलैः पूरितः । ईषत्ताम्रजटाग्रपल्लवयुतो न्यस्तो जगन्मण्डपे

१ शरीरम्. २ आकुलः. ३ वामन.. ४ अस्थिपञ्जरः. ५ वराहः. ६ द्यावापृथिव्यौ. ७ सतां मोहं स्यतु खण्डयतु. ८ विकारे. ९ दयासंकुचिता.. १० राहुः. ११ सूत्रम्. १२ गरुडम्. १३ गजचर्म. १४ कर्वन्निति शेषः

शंभुर्मङ्गलकुम्भतामुपगतो भूयात्सतां श्रेयसे ॥ ४७ ॥ मल्लीमाल्यधिया सुधाकरकलां कण्ठश्रियं कज्जलभ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया । कैलासे प्रतिबिम्बितात्स्ववपुषो गृह्णन्हसन्त्या मुहुः पार्वत्या प्रतिकर्मकर्मणि चिरं मुग्धो हरः पातु वः ॥ ४८ ॥ दास्येऽहं परिरम्भणानि कितव[1] द्यूते जितानि त्वया धैर्यं धेहि यतः कृतः शतमहोरात्राणि तत्रावधिः । इत्युक्तः शिवया निशादिवसकृज्ज्योतिर्मयाक्षिद्वयद्रागुन्मेषनिमेषकोटिघटनाव्यग्रो हरः पातु वः ॥ ४९ ॥ मौलौ किं नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं किं नीलालकवेणिका मधुकरी किं भ्रूलता वीचिका । किं नेत्रे शफरौ किमु स्तनयुगं प्रेङ्खद्रथाङ्गद्वयं[2] साशङ्कामिति वञ्चयन्गिरिसुतां गङ्गाधरः पातु वः ॥ ५० ॥ देव्याः प्राक्परिरम्भणे[3] किल करौ द्वौ द्वौ पुनस्तत्करौ रोद्धुं तन्मुखमुन्मुखं रचयितुं द्वौ चाधरास्वादने । द्वौ नेत्रान्तपलालकोपनयने मोक्तुं च नीवीं दृढां द्वावित्थं सफलीकृताखिलकरः पायात्स वः शंकरः ॥ ५१ ॥ न क्रोधः क्रियतां प्रिये स तु भवन्मौलिस्थगङ्गोदरे मुग्धे मानसपूजितं त्यज कृतं युष्मन्नियोगद्वयम् । वक्रे श्लेषममुं निराकुरु कदाश्लिष्टोऽसि वक्रो मया वामाङ्गयेति हृतोत्तरः स्मरहरः स्मेराननः पातु वः ॥ ५२ ॥ अङ्गं येन रथीकृतं नयनयोर्युग्मं रथाङ्गीकृतं पात्रं स्वं रथकर्मसारथिकृतं श्वासास्तुरंगीकृताः । कोदण्डीकृतमात्मवीर्यमचिरान्मौर्वीकृतं भूषणं[4] वामाङ्गं विशिखीकृतं दिशतु नः क्षेमं स धन्वी पुमान् ॥ ५३ ॥ नृत्यारम्भरसत्रसद्गिरिसुतारिक्तार्धसंपूर्तये निर्व्यूढ[5]भ्रमि[6]विभ्रमाय जगतामीशाय तुभ्यं नमः । यच्चूडाभुजगेश्वरप्रभृतिभिस्तादृग्भ्रमन्तीर्दिशः पश्यद्भिर्घनघूर्णमाननयनैः शान्तोऽपि न श्रद्दधे ॥ ५४ ॥ उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणाली[7]पतत्स्वर्गङ्गाजलदण्डि[8]कावलयितं निर्माय तत्पञ्जरम् । संभ्राम्यद्भुजदण्डपक्षपटलद्वन्द्वेन हंसायितस्त्रैलोक्यव्ययनाटिकानयनटः स्वामी जगत्त्रायताम् ॥ ५५ ॥ यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं मेरौ पार्श्वनिवासिवासरनिशाचित्रे[9] परिभ्राम्यति । तैजस्यस्ताडितो भवन्तु शतशो दृष्टा हि तास्ताः कथं तामि[10]स्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः ॥ ५६ ॥ तत्कालारभटी[11]विजृम्भणपरित्रासादिव भ्रश्यता वामार्धेन तदेकशेषकरणं बिभ्रद्वपुर्भैरवम् । तुल्यं चास्थिभुजंगभूषणमसौ भोगीन्द्रकङ्कालकैर्बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः ॥ ५७ ॥ चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो माद्यज्जटापल्लवो दृप्यद्दारुणदन्दशूक[12]मणिमांस्तत्पञ्चशाखालयः । स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रवत्पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा ॥ ५८ ॥ वक्त्राम्भोरुहि विस्मिताः स्तबकिता वक्षोरुहि स्फारिताः श्रोणीसीमनि गुम्फिताश्चरणयोरक्ष्णोः पुनर्विस्तृताः । पार्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्तु भद्राणि वो विद्धस्यान्तिकपुष्पसायकशरैरीशस्य दृग्भङ्गयः ॥ ५९ ॥ शैलेन्द्रप्रतिपाद्यमान[13]गिरिजाहस्तोपगूढोल्लसद्रोमाञ्चा-

१ अक्षधूर्त. २ चक्रवाकः. ३ आलिङ्गने. ४ सर्प.. ५ समाप्त. ६ भ्रमणम्. ७ जलस्य निर्गमनमार्गे मकरमुखादिरूपा. ८ दण्डः. ९ कर्बुरवर्ण.. १० तमोमयाः. ११ नाट्यभेदः. १२ सर्पः. १३ दीयमानम्.

दिविसंष्ठुलाखिलविधिन्यासङ्गभङ्गाकुलः । आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ ६० ॥ दिक्कालात्मसमैव यस्य[1] विभुता यैस्तत्र[2] विद्योतते यैस्त्रा[3][4]मुष्य सुधीभवन्ति किरणा राशेः स[5] यासाम[6]भूत् । यैस्[7]तत्पि[8]त्तमुषःसु[9] योऽस्य[10][11] हविषे यैस्[12]तस्य[13] जीवातवे वोढा यद्गुण[14]मेष[15] मन्मथरिपोस्ताः पान्तु नो मूर्तयः ॥६१॥ जीर्णेऽप्युत्कटकालकूटगरले छुष्टे तथा मन्मथे नीते भासुरभालनेत्रतनुतां कल्पान्तदावानले । यः शक्त्या समलंकृतोऽपि शशिनं शैलात्मजां स्वर्धुनीं धत्ते कौतुकराजनीतिनिपुणः पायात्स वः शंकरः ॥ ६२ ॥ किं गोत्रं किमु जीवनं किमु धनं का जन्मभूः किं वयः किं चारित्र्यममुष्य के सहचराः के वंशजाः प्राक्तनाः । का माता जनकः शिवस्य क इति प्रह्वेर्ण[16] पृथ्वीभृता पृष्टाः सस्मितनम्रमूकवदनाः सप्तर्षयः पान्तु वः ॥ ६३ ॥ तादृक्सप्तसमुद्रमुद्रितमहीभूभृद्भिरभ्रंकषैः स्रोतोभिः परिवारिता दिशि दिशि द्वीपैः समन्तादयम् । यस्य स्फारफणावलीमणिचये मज्जत्कलङ्काकृतिः शेषः सोऽप्यगमद्यदङ्गदपदं तस्मै नमः शंभवे ॥ ६४ ॥ तारानायकशेखराय जगदाधाराय धाराधरच्छायाधारककन्धराय गिरिजासङ्गैकभृङ्गारिणे । नद्या शेखरिणे दृशा तिलकिने नारायणेनास्त्रिणे नागैः कङ्कणिने नगेन गृहिणे नाथाय नित्यं नतिः ॥ ६५ ॥ केयूरीकृतकङ्कणीकृतजटाजूटावतंसीकृतज्यावल्लीकृतकुण्डलीकृतकटीसूत्राकृताहीश्वरः । पायाद्वस्तिलकीकृतप्रियतमादर्शीकृताक्षीकृतद्यूतारम्यपणीकृतेन्दुशकलः कात्यायनीकामुकः ॥ ६६ ॥ कान्तां कामपि कामयत्यनुदिनं ध्यानापदेशादयं येनामुं मुनयोऽप्यनादिनिधनं ध्यायन्ति धौतस्पृहाः । इत्यङ्कात्स्वकरे हृते गिरिजया पादे च पद्मासनाद्विश्वं पातु पुरंध्रिनद्धवपुषः शंभोः समाधिव्ययः ॥ ६७ ॥ स्नातः स्वर्गतरङ्गिणीजलभरैर्नेत्रोत्पलेनाञ्चितः पार्वत्याः सितभूतिचन्दनचयैरालिप्तगात्रोज्ज्वलः । देवश्चन्द्रकलासितभ्रुतिलको गौरीविवाहोत्सवारम्भे शैलकृतार्हणस्त्रिजगतामर्च्यो हरः पातु वः ॥ ६८ ॥ उज्झित्वा दिशमम्बरं वरतरं वासो वसानश्चिरं हित्वा वासरसं पुनः पितृवने कैलासहर्म्याश्रयः । त्यक्त्वा भस्म कृताङ्गरागनिचयः श्रीखण्डसारद्रवैर्देवः पातु हिमाद्रिजापरिणयं कृत्वा गृहस्थः शिवः ॥ ६९ ॥ क्रीडन्मन्दरकन्दरोदरवलन्मन्दारवृन्दावने क्रोधान्धान्धकटातयाशु हरणे जृम्भत्रिशूलोद्गमः । त्रैलोक्याखिलसंकटोत्कटभयोद्वेलान्धकारांशुमान्पायाद्वस्त्रिपुरप्रमाथनपटुर्देवो हि पञ्चाननः ॥ ७० ॥ गर्जद्भीमभुजंगभीषणफणाफूत्कारभीतिप्रदः क्रीडत्प्रेतपिशाचराक्षसगणः प्रत्यक्षतः प्रान्ततः । भालस्थप्रलयानलोद्भटशिखः संक्रान्तसर्वास्पदः शार्दूलाजिनभृद्भयानकभयो भूयाद्भवो भूतये ॥ ७१ ॥ गौरीचुम्बनचञ्चलं परिचलद्दण्डप्रभामण्डलं व्यावल्गत्फणिकुण्डलं रतिरसप्रस्विन्नगण्डस्थलम् । प्रौढप्रेमपरम्परापरिचयप्रोत्फुल्लनेत्राञ्चलं

---

१ आकाशस्य. २ सूर्यः. ३ चन्द्रे. ४ सूर्यस्य. ५ चन्द्रः. ६ अपाम्. ७ अग्निः. ८ अपाम्. ९ शुचिरुदकम्. १० यजमानः. ११ अग्नेः. १२ वायुः. १३ यजमानस्य. १४ पृथिव्याः. १५ वायुः. १६ नम्रेण.

शंभोरस्तु विभूतये हि भवतामुन्मत्तगङ्गं शिरः ॥ ७२ ॥ पाणौ कङ्कणमुत्फणं फणिपतिर्नेत्रं लसत्पावकं कण्ठः कुण्ठितकालकूटविषमो वस्त्रं गजेन्द्राजिनम् । गौरीलोचनलोभनाय सुभगो वेषो वरस्यास्ति मे गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥ ७३ ॥ दिव्यं[1] वारि कथं यतः सुरधुनी मौलौ कथं पावको दिव्यं तद्धि विलोचनं कथमहिर्दिव्यं स चाङ्गे तव । तस्माद्द्यूतविधौ त्वयाद्य मुषितो हारः परित्यज्यतामित्थं शैलभुवा विहस्य लपितः शंभुः शिवायास्तु वः ॥ ७४ ॥ तातं तत्ताततातं कथय हरकुलेऽलंकृते संप्रदाने तच्छ्रुत्वा चन्द्रमौलिर्नतमुखकमलो जातलज्जो बभूव । ब्रह्मावादीत्तदानीं शृणुत हरकुलं वेदकण्ठोग्रकण्ठौ श्रीकण्ठान्नीलकण्ठः प्रहसितवदनः पातु वश्चन्द्रचूडः ॥ ७५ ॥ या[2] सृष्टिः स्रष्टुराद्या वहति विधिहुतं या[3] हविर्या च होत्री[4] ये[5] द्वे कालं विधत्तः श्रुतिविषयगुणा या[6] स्थिता व्याप्य विश्वम् । यामाहुः[7] सर्वबीजप्रकृतिरिति यया[8] प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ ७६ ॥ एकैश्वर्यस्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासंमिश्रदेहोऽप्यविषयमनसां यः पुरस्ताद्यतीनाम् । अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स नस्तामसीं वृत्तिमीशः ॥ ७७ ॥ कैलासाद्द्रावुदस्ते[9] परिचलति गणेषूल्लसत्कौतुकेषु क्रोडं[10] मातुः कुमारे विशति विषमुचि[11] प्रेक्षमाणे सरोषम् । पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयघनमुमया पातु हृष्टः शिवो नः ॥ ७८ ॥ क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयोऽपि[12] त्रासार्ता ऋत्विजोऽधश्चपलगणहतोष्णीषपट्टाः पतन्ति । दक्षः स्तौत्यस्य पत्नी विलपति कृपणं[13] विद्रुतं चापि देवैः शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ ७९ ॥ आसीने पूष्णि[14] तूष्णीं व्यसनिनि शशिनि व्योम्नि कृष्णे सतृष्णे दैत्येन्द्रे जातनिद्रे द्रवति मघवति क्रान्तकान्तौ कृतान्ते । अब्रह्मण्यं ब्रुवाणे कमलपुटकुटीश्रोत्रिये[15] शान्त्युपाये पायाद्वः कालकूटं झटिति कवलयँल्लीलया नीलकण्ठः ॥ ८० ॥ केयं मूर्ध्न्यन्धकारे[16] तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते कान्ताप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव । नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानीमित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥ ८१ ॥ धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः । नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुर्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ ८२ ॥ हर्षादम्भोजजन्मप्रभृतिदिविषदां[17] संसदि प्रीतिमत्या श्वश्र्वा मौलौ पुरा-

---

१ शपथविशेषः. २ उदकरूपा. ३ अग्निरूपा. ४ यजमानरूपा. ५ सूर्यचन्द्ररूपे. ६ आकाशरूपा. ७ पृथ्वीरूपा. ८ वायुरूपा. ९ उत्क्षिप्ते. १० भुजान्तरे. ११ सर्पे. १२ दक्षिणगार्हपत्याहवनीयाख्याः. १३ दीनस्वरेण. १४ सूर्ये. १५ ब्रह्मणि. १६ अन्धकरिपो; (पक्षे) तमसि. १७ ब्रह्मा.

रेर्दुहितृपरिणये साक्षतं चुम्ब्यमाने । तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो दृष्ट्वा तद्वृत्तमाशु स्मितसुभगमुखः पातु वः पञ्चवक्त्रः ॥ ८३ ॥ कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः क्रीडन्कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः । कङ्कालक्रीडनोत्कः कलितकलकलः कालकालीकलत्रः कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिको नः ॥ ८४ ॥ दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन । आदायास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ८५ ॥ क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण । आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ ८६ ॥ कल्याणं वः क्रियासुर्मिलदटनि[1]युगस्थास्नु[2]गीर्वाणभोगिस्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनोनागहारावलीनि । नालीका[3]श्लिष्टलक्ष्मीकरतलकमलोद्वान्तर्माध्वीक[4]धारातिम्यत्फालेक्षणा[5]नि त्रिपुरहरधनुर्ज्यालताकर्षणानि ॥ ८७ ॥ कल्पान्ते क्रोधनस्य त्रिपुरविजयिनः क्रीडया संचरिष्णोः कृत्वापि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः । दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिं प्रेक्ष्य चात्मीयमूर्तिग्रासव्यासक्तमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥ ८८ ॥ पर्यङ्क[6]ग्रन्थिबन्ध[7]द्विगुणितभुजगाश्लेषसंवीत[8]जानोरन्तःप्राणावरोधव्युपरत[9]सकलज्ञानरुद्धेन्द्रियस्य । आत्मन्यात्मानमेव व्यपगतकरणं[10] पश्यतस्तत्त्वदृष्ट्या शंभोर्वः पातु शून्येक्षण[11]घटितलय[12]ब्रह्मलग्नः समाधिः ॥ ८९ ॥ वृत्ताभिख्यां हृतार्या श्रितविविधगणां छन्दसां वर्णनीयां यातां सर्वादिमत्त्वं सुरगणकलितां भासमत्त्वं दधानाम् । युक्तं स्थानं नयन्तीं लघुमपि सकलं बिभ्रतीं मालयायान्वन्दे वार्धीभवर्णां धृतमुनियतिकां स्रग्धरां शंभुमूर्तिम् ॥ ९० ॥ देहार्धानद्धकान्ताकचकुसुमचयो भालनेत्रानलार्चिःपीनोष्मा मौलिखेलन्मुखरसुरनदीनीररम्यो जगन्ति । स्फीतोत्तंसेन्दुकान्तिर्द्विरददृतिदृढाच्छादनव्यक्तशीतः शंभुर्भूषास्थिकुन्दप्रकरपरिवृतः पातु सर्वर्तुमूर्तिः ॥ ९१ ॥ हेयोपादेयशून्यं मुनिगणमनसामद्वयानन्दहेतुः सेतुः संसारवारांनिधिसुखतरणे श्रीमहेशानसंज्ञम् । प्रालेयं ज्योतिरन्तः परिणततिमिरव्यूहविच्छेददक्षं किंचिद्वाचामधीशं स्फुरतु मम हृदि त्र्यक्षरं विश्वसाक्षि ॥ ९२ ॥ शुद्धान्ते सीधुपानोन्मदमदनमदोन्मादमत्तालिकालीतालीसंताड्यमानोद्भटमुरजरवाडम्बरोल्लासिताङ्गः । नृत्यन्नग्नो विलज्जश्चलविकटतटैः स्रस्तयैर्लोचनार्धैर्दृष्टः स्त्रीभिः सहासं प्रहसनमुदितः पातु वो वामदेवः ॥ ९३ ॥ बिभ्रत्पाथःकपर्दे सुरनगरनरीमिन्दुलेखां ललाटे नेत्रान्तः कालवह्निं गरलमपि गले व्याघ्रचर्माङ्गभागे । पञ्चास्यो

---

१ धनुष्कोटिः. २ स्थिरतरम्. ३ विष्णुरूपः शरः. ४ पुष्परसः. ५ वह्न्यात्मकं तृतीयलोचनम्. ६ योगशास्त्रप्रसिद्धासनविशेषः. ७ संधिः. ८ आवृत. ९ निवृत्त. १० चक्षुरादीन्येकादशेन्द्रियाणि बुद्धिरहंकारश्चेति त्रयोदशविधम्. ११ प्रपञ्चाभावः. १२ चित्तैकाग्रता.

वै त्रिनेत्रो वृषभगतिरतिर्वामभागार्धवामः संदिश्यात्संपदं वः सह सकलगुणैरद्भुताकार ईशः ॥ ९४ ॥

**जटाजूटः** ॥ स धूर्जटिजटाजूटो जायतां विजयाय वः । यस्यैकपलितभ्रान्तिं करोत्यद्यापि जाह्नवी ॥ ९५ ॥ चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः । पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो भूतेशस्य भुजंगवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ ९६ ॥ गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखारत्नैः कोरकिताः सितांशुकलया स्मेरैकपुष्पश्रियः । आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहदा नाल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः ॥ ९७ ॥

**गङ्गा** ॥ पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम् । हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥ ९८ ॥ इयं चिद्रूपापि प्रकटजडरूपा भगवती यदीयाम्भोबिन्दुर्वितरति च शंभोरपि पदम् । पुनाना धुन्वाना निखिलमपि नानाविधमघं जगत्कृत्स्नं पायादनुदिनमपायात्सुरधुनी ॥ ९९ ॥ चूडाशीतकरस्तनंधयसुधानीरन्ध्रगन्धस्पृशः क्रीडाकङ्कणपन्नगेश्वरफणापीतावशिष्टा मुहुः । अङ्कासीनगिरीन्द्रजास्तनतटीहारावलीलोलनाः संतापं शमयन्तु वो हरजटागङ्गातरङ्गानिलाः ॥ १०० ॥ वायुर्वाति यदङ्गसंगमवशाच्छ्रीशंभुरूपप्रदो गौरी रुष्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचते । चन्द्रस्त्रस्यति कुप्यते हरिरपि ब्रह्मा परं शङ्कते सा गङ्गा निखिलं कलङ्कनिचयं भङ्गं तरङ्गैर्नयेत् ॥ १०१ ॥ शार्ङ्गी ब्रह्मकमण्डलोरधिगतैर्यैः प्रापि तीर्थाङ्कितां यैर्मृत्युंजयतामनायि गरलग्रस्तो जटाजूटगैः । येभ्योऽशिक्षत माधुरीं मृदुजटाजूटे मठे चन्द्रमास्तानीमानि पयांसि गौतमि तव श्रेयांसि यच्छन्तु नः ॥ १०२ ॥ यन्नाम्नः प्रथमाक्षरं विजयते भानौ द्वितीयाक्षरं नित्यं नृत्यति सत्कवीन्द्रवदने भूत्वान्त्यवर्णद्वयम् । रामो रावणमाजवान समरे शंभोः शिरःशालिनी सा सर्वाक्षरमालिनी भवतु मे भाग्याय भागीरथी ॥ १०३ ॥ मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा वह्नौ लाजनिभा दृशोर्मणिनिभा भोगोत्करे भोगिनाम् । नृत्यावर्तविवर्तनेरितपयःसंमूर्छनोच्छालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥ १०४ ॥ एषा धर्मपताकिनी तटतरुच्छायावसन्नाकिनी शुष्यत्पातकिनी भगीरथतपःसाफल्यसंदायिनी । प्रेमारूढपिनाकिनी गिरिसुतासौकेकरालोकिनी पापाडम्बरडाकिनी त्रिभुवनानन्दाय मन्दाकिनी ॥ १०५ ॥ स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥ १०६ ॥ शैवालश्रेणिशोभां दधति हरजटावल्लयो हन्त यस्यास्तद्वासोल्लासवेल्लद्दृश-

---

१ केशादौ जरसा यच्छौक्ल्य तत्. २ तिर्यङ्नद्धमाला. ३ निबिड. ४ तिर्यग्दृष्ट्या. ५ अनूपसदृशः कश्चिन्नद्यादेरुपान्तदेशः. ६ बलवान्. ७ पाङ्किः. ८ नश्यत्. ९ झटिति. १० व्यक्तीभवत्. ११ अक्षीणानाम्. महतामित्यर्थः. १२ सान्द्रस्निग्धः. १३ मान्द्यम्.

फरतुलां यत्र धत्ते कलावान् । उन्मीलद्भोगिभोगावलिसुभगसिताम्भोजसंभाविताम्भा गङ्गानङ्गारिसङ्गा महति तव विधौ मङ्गलान्यातनोतु ॥ १०७ ॥ दृष्टाः संकष्टदाहाः श्रवणपथगताः पुण्यपुञ्जावगाहाः स्पृष्टाः संसारपाथोनिधिपतितधरोद्धारधुर्या वराहाः । पीतास्तापोपशान्तिप्रजननपटवस्ते सुधावारिवाहाः कल्याणं कल्पयन्तां कलिकलुषहरा विष्णुपद्याः प्रवाहाः ॥ १०८ ॥ तावत्कर्णाध्वयाता जनघनकलुषाधूनने गन्धवाहा दृष्टाः किं हव्यवाहाः सकृदघदहने स्वर्गतौ पुण्यवाहाः । स्पष्टाः संसारहाहारवकटुकमहाम्भोधिमग्ने वराहाः पीताः पीयूषधाराधिकतरमधुराः पान्तु गोदोदवाहाः ॥ १०९ ॥

**शशिलेखा** ॥ पूर्णनखेन्दुद्विगुणितमञ्जीरा प्रेमशृङ्खला जयति । हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ ११० ॥ जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन । इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥ १११ ॥ श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणीसंदष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम् । या बिम्बप्रतिपूरणाय परितो निष्पीड्य संदंशिकायन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥ ११२ ॥

**लोचनम्** ॥ जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ । धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ ११३ ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् । प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ ११४ ॥ सानन्दा गणनायके सपुलका गौरीमुखाम्भोरुहे सक्रोधा कुसुमायुधे सकरुणा पादानते वज्रिणि । सस्मेरा गिरिजासखीषु सनया शैलाधिनाथे वहन्भूमीन्द्र प्रदिशन्तु शर्म विपुलं शंभोः कटाक्षच्छटाः ॥ ११५ ॥ एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् । अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ ११६ ॥ पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव । अर्चिर्निःशेषचूडाशशिगलितसुधासारझांकारि कोणं तार्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥ ११७ ॥

**कण्ठः** ॥ पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ ११८ ॥ पातु वः शितिकण्ठस्य तमालश्यामलो गलः । संसक्तपार्वतीबाहुसुवर्णनिकषोपलः ॥ ११९ ॥ कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति । याः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागुरुस्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ १२० ॥ कस्तूरीयन्ति भाले तदनु नयनयोः कज्जलीयन्ति कर्णप्रान्ते नीलोत्पलीयन्त्युरसि मरकतालंकृतीयन्ति देव्याः । रो-

---

१ जटाजूट.. २ कर्तरिका. ३ शान्तिमति. ४ व्याप्तम्. ५ अधोगामि.

मालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये कल्याणं कुर्युरेते त्रिजगति पुरजित्कण्ठभासां विलासाः ॥ १२१ ॥

**शिरोमालिका** ॥ पित्रोः पादाब्जसेवागतगिरितनयापुत्र[1]पत्रा[2]तिभीतक्षुभ्यद्भूषाभुजंगश्वसनगुरुमरुद्दीप्तनेत्राग्नितापात् । स्विद्यन्मौलीन्दुखण्डस्रुतबहुलसुधासेकसंजातजीवा पूर्वाधीतं पठन्ती ह्यवतु विधिशिरोमालिका शूलिनो वः ॥ १२२ ॥

**गणाः** ॥ संध्याताण्डवडम्बरप्रणयिनो देवस्य चण्डीपतेर्भ्रष्टापाण्डुविशीर्णमुण्डचयनव्यग्रा गणाः पान्तु वः । यैरौत्सुक्यवशीकृतैर्ग्रहगणाद्राहौ गृहीते जवात्सूर्याचन्द्रमसोर्मिथः स्मितवतोर्जातं करास्फालनम् ॥ १२३ ॥

**नन्दी** ॥ कण्ठालंकारघण्टाघणघणरणिताध्मा[3]तरोदः[4]कटाहः कण्ठे[5]कालाधिरोहोचितघनसुभगं[6]भावुकस्निग्धपृष्ठः । साक्षाद्धर्मो वपुष्मान्धवलककुदनिर्धूत[7]कैलासकूटः कूट[8]स्थो वः ककुद्मान्निबिडतरतमः[9]स्तोमतृण्यां[10] वितृण्यात्[11] ॥ १२४ ॥

**ताण्डवम्** ॥ देवा दिक्पतयः प्रयात परतः खं मुञ्चताम्भोमुचः पातालं व्रज मेदिनि प्रविशत क्षोणीतलं भूधराः । ब्रह्मन्नुन्नय दूरमात्मभवनं नाथस्य नो नृत्यतः शंभोः संकटमेतदित्यवतु वः प्रोत्सारणा नन्दिनः ॥ १२५ ॥ दोर्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरवध्वानोद्गीतजगद्भ्रमत्पदभरालोलत्फणाग्र्योरगम् । भृङ्गापिङ्गजटाटवीपरिसरोद्गङ्गोर्मिमालाचलच्चन्द्रं चारु महेश्वरस्य भवतां निःश्रेयसे ताण्डवम् ॥ १२६ ॥ संध्याताण्डवडम्बरव्यसनिनो भर्गस्य चण्डभ्रमिव्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिलाः पान्तु वः । येषामुद्धतताण्डवेन झटिति व्यूहेषु भूमीभृतामुड्डीनेषु बिडौजसा[12] पुनरसौ दम्भोलि[13]रालोकितः ॥ १२७ ॥ यस्यां मौलिमिलत्सुधांशुकलया संपूर्णबिम्बार्पितं भालावस्थितलोचनेन सहसैवालातचक्रायितम् । आवर्तायितमाकपर्दममरस्रोतस्वतीधारया पातु त्रीणि जगन्ति खण्डपरशोः सा ताण्डवाङ्गभ्रमिः ॥ १२८ ॥ पादस्याविर्भवन्तीमवनतिमवने[14] रक्षतः स्वैरपातैः[15] संकोचेनैव दोष्णां मुहुरभिनयतः सर्व[16]लोकातिगानाम् । दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीतेरित्याधारा[17]नुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ १२९ ॥ मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालोद्भूताम्भःक्षोद[18]दम्भात्प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम् । ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेशभ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः ॥ १३० ॥ शर्वाणी[19]पाणितालैश्चलवलयझणत्कारिभिः श्लाघ्यमानं स्थाने[20] संभाव्यमानं पुलकितवपुषा

---

१ षडानन.. २ वाहनम्. मयूर इत्यर्थ.. ३ पूरित. ४ द्यावापृथिव्यौ. ५ शकरः. ६ सुभगं भवतीति तत्. ७ परिभूत. ८ निश्चलः. निर्विकारतया चिरजीवीत्यर्थः. ९ अज्ञाननिवहः. १० तृणसमूहः. ११ खादतु. १२ इन्द्रेण. १३ वज्रम्. १४ पृथिव्याः. १५ यथेष्टं क्षेपणैः. १६ अतिक्रान्तचतुर्दशभुवनानाम्. १७ आधारस्य पृथिव्यादेरनुरोधादनुसारात्. १८ कणाः. १९ पार्वती. २० उचितम्.

शंभुना प्रेक्षकेण । खेलत्पिच्छालि केकाकलकलकलितं क्रौञ्चभिद्बर्हियूना हेरम्बाकाण्डबृंहितैस्तरलितमनसस्ताण्डवं त्वां धिनोतु ॥ १३१ ॥ पायादायासखेदक्षुभितफणिफणारत्ननिर्यत्ननिर्यच्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम् । अभ्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीकनालच्छेदामोदानुधावद्बधिरमिव खगे धूर्जटेस्ताण्डवं नः ॥ १३२ ॥ उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपातस्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसंगमानि । जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसंघट्टभूरिभ्राम्यन्नक्षत्रचक्रव्यवसितसुमनोवृष्टिपातानि शंभोः ॥ १३३ ॥ देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येष लोकानस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव । वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः शंभोर्नृत्यावतारे वलयमणिफणाफूत्कृतैर्विप्रकीर्णः ॥ १३४ ॥ चञ्चद्देवेन्द्रकुट्यश्चलितदशदिशाकीर्णकोटीरकोव्यः संगायत्स्वर्वधूव्यः सरभसविनमत्सिद्धगन्धर्वधाव्यः । विश्लिष्यच्चर्मपल्यो विगलितशतपत्रासनोद्यत्करोव्यस्त्रुव्यत्कैलासतट्यस्त्रिपुरविजयिनः पान्तु मामारभटयः ॥ १३५ ॥

**अर्धनारीश्वरः** ॥ मन्दारमालाकुलितालकायै कपालमालाङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय ॥ १३६ ॥ एकः स्तनस्तुङ्गतरः परस्य वार्तामिव प्रष्टुमगान्मुखाग्रम् । यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातु वः पर्वतराजपुत्री ॥ १३७ ॥ यस्योपवीतगुण एव फणावृतैकवक्षोरुहः कुंचपटीयति वामभागे । तस्मै ममास्तु तमसामवसानसीम्ने चन्द्रार्धमौलिशिरसे महसे नमस्या ॥ १३८ ॥ स्वेदार्द्रवामकुचमण्डनपत्रभङ्गसंशोषिदक्षिणकराङ्गुलिभस्मरेणुः । स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी वः शंभोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥ १३९ ॥ संभोगानतिरिच्यमानविभवो यद्विप्रलम्भो रसस्तद्दिव्यं मिथुनं परस्परपरिस्यूतं नमस्कुर्महे । एकस्याः प्रतिबिम्बसंभृतविपर्यासे मुहुर्दर्पणे सव्याङ्गस्थितिकौतुकं शमयति स्वामी स यत्रापरः ॥ १४० ॥ स्वच्छन्दैकस्तनश्रीरुभयदलमिलन्मौलिचन्द्रः फणीन्द्रप्राचीना[11]वीतवाही सुखयतु भगवानर्धनारीश्वरो वः । यस्यार्धे विश्वदाहव्यसनविसृं[12]भरज्योतिरर्धे कृपोद्यद्बाष्पं चान्योन्यवेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम् ॥ १४१ ॥

## पार्वती ।

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् । कालकूटविषस्पर्शजातमूर्छागमामिव ॥ १ ॥ पा[13]र्वतीमोषधीमेका[14]मपर्णां मृगयामहे । शू[15]ली हालाहलं पीत्वा यया मृ[16]त्युंजयोऽभवत् ॥ २ ॥ अपर्णैव लता सेव्या विद्वद्भिरिति मे मतिः । यथावृत्तः पुराणोऽपि स्थाणुः सूतेऽमृतं फ-

१ बर्हपङ्क्तयः. २ षडाननः. ३ अकालेभवम्. ४ गर्जितम्. ५ क्षुब्धचेतसः. मेघनिर्घोषभ्रान्त्येति भावः. ६ अनायासम् ७ सुरसरित्. ८ बाणः. ९ ताण्डवप्राचण्डयम्. १० कञ्चुकीभवति. ११ यज्ञोपवीतम्. १२ प्रसारी. १३ पर्वतसंबन्धिनीम्; (पक्षे) पर्वतपुत्रीम्. १४ पर्णरहिताम्; (पक्षे) एतन्नाम्नी पार्वतीम्. १५ शूलरोगवान्; (पक्षे) त्रिशूलधारी. १६ मृत्युनाशकः; (पक्षे) एतन्नाम्ना प्रसिद्धः शिवः.

लम् ॥ ३ ॥ मृणालव्यालवलया वेणीबन्धकपर्दिनी । हरानुकारिणी पातु लीलया पार्वती जगत् ॥ ४ ॥ जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका । सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥ ५ ॥ तपस्वी कां गतोऽवस्थामिति स्मेराननाविव । गिरिजायाः स्तनौ वन्दे भवभूतिसिताननौ ॥ ६ ॥ चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति । शंकरपर्यन्तजितो वीरस्तम्भः स्मरस्येव ॥ ७ ॥ उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि । जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ ८ ॥ अङ्कनिलीनगजाननशङ्काकुलबाहुलेयहृतवसनौ । सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ ९ ॥ कण्ठोचितोऽपि हुंकृतिमात्रनिरस्तः पदान्तिके पतितः । यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥ १० ॥ शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीद्रपुत्री । अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥ ११ ॥ तद्वः प्रमार्ष्टु विपदः प्रणतार्तिहन्त्र्या न्यस्तं पदं महिषमूर्धनि चण्डिकायाः । वैरी यदीयनखरांशुपरीतशृङ्गः शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत् ॥ १२ ॥ श्रुत्वा षडाननजनुर्मुदितान्तरेण पञ्चाननेन सहसा चतुराननाय । शार्दूलचर्म भुजगाभरणं सभस्म दत्तं निशम्य गिरिजाहसितं पुनातु ॥ १३ ॥ पञ्चास्यपञ्चदशनेत्रपिधानदक्षा दाक्षायणीमृदुकराः कृतिनः पुनन्तु । द्वौ वल्लकीं कथमकेति च वादयन्तावष्टादशोऽपि घटयन्स्तुतिमौनमुद्राम् ॥ १४ ॥ आनन्दमन्थरपुरंदरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य । पादाम्बुजं भवतु वो विजयाय मञ्जु मञ्जीरशिञ्जितमनोहरमम्बिकायाः ॥ १५ ॥ ब्रह्मादयोऽपि यदपाङ्गतरङ्गभङ्ग्या सृष्टिस्थितिप्रलयकारणतां व्रजन्ति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै नमोऽस्तु सततं हरवल्लभायै ॥ १६ ॥ ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठप्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः । त्वां पातु मञ्जरितपल्लवकर्णपूरलोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १७ ॥ पौलस्त्यपीनभुजसंपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥ १८ ॥ रचयति सहसा यच्चित्रमेतत्प्रपञ्चं प्रशमयति च तद्वत्केनचित्कौतुकेन । अविदितमपरैस्तच्चण्डमुण्डादिनानादनुजदलनदक्षं शर्वसर्वस्वमव्यात् ॥ १९ ॥ प्रचण्डचण्डमुण्डयोर्महाबलैकखण्डिनी ह्यनेकरुण्डमुण्डयुग्रणे बलैकदायिनी । क्वचित्त्वशक्तिकारिणी रमाविलासदायिनी मुदेऽस्तु कालिका सदा समस्तपापहारिणी ॥ २० ॥

---

१ स्वतः सुखविशेषजनकतया तुच्छविषयपराङ्मुखस्याप्येतादृश्यवस्थासपादनादिति भावः. २ स्तनयोः कुम्भिकुम्भसाम्यादिति भावः. ३ कथं मां विहायैनमेव सगोप्य बहुकालं स्तन्यं प्रयच्छतीति धियेति भावः. ४ कार्तिकेयः. ५ गजाननिर्णयार्थमिति भावः. ६ आलिङ्गनार्होऽपि; (पक्षे) अर्धचन्द्राकारतया कण्ठलक्ष्ययोग्योऽपि. ७ न तु करतर्जनादिना; (पक्षे) बाणादिना. ८ प्रणामार्थमिति भावः; (पक्षे) वेगवशादिति भावः. ९ हस्तविन्यासविशेषः. १० इन्दुमौले. प्रियायाः पार्वत्याः. ११ शर्वस्य शिवस्य सर्वस्वं पार्वतीरूपम्.

पुरारितनुहारिणी दुरितसङ्घसंहारिणी भजन्मतिविवर्धिनी प्रबलदानवोन्मर्दिनी । तुषारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी कुमारमुखचुम्बिनी हरनितम्बिनी पातु वः ॥ २१ ॥ सत्त्वादिस्थैरगणितगुणैर्हन्त विश्वं प्रसूय व्यक्तं धत्ते प्रहसनकरीं या कुमारीति संज्ञाम् । मोहध्वान्तप्रसरविरतिर्विश्वमूर्तिः समन्तादाद्या शक्तिः स्फुरतु मम सा दीपवद्देहगेहे ॥ २२ ॥ औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे संगमे संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ २३ ॥ आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता धूमोद्गमव्याजतः । पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला पार्वत्याः परिणीतिमङ्गलविधौ दृष्टिः शिवायास्तु वः ॥ २४ ॥ प्रत्यासन्न[1]विवाहमङ्गलविधौ देवार्चनव्यग्रया दृष्ट्वाग्रे परिणेतु[2]रेव लिखितां गङ्गाधरस्याकृतिम् । उन्माद[3]स्मितरोषलज्जितधिया गौर्या कथंचिच्चिराद्वृद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ २५ ॥ रामा[4]द्याचय मेदिनीं धनपते[5]र्बीजं बला[6]ल्लाङ्गलं प्रेतेशा[7]न्महिषं तवास्ति वृषभः फालं त्रिशूलं तव । शक्ताहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ २६ ॥ हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् । नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ॥ २७ ॥ मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमाः किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ । कृत्तिः किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते श्रुत्वा पुत्रवचोऽम्बिका स्मितमुखी लज्जावती पातु वः ॥ २८ ॥ धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः पश्यन्तीव समुत्सुका नतमुखी भूयो ह्रिया ब्रह्मणः । सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने हरे स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः ॥ २९ ॥ गोनासाय[10] नियोजितागदरजाः सर्पाय बद्धौषधिः कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन्बिभ्रती । भर्तुर्भूतगणाय गोत्रजरती[11]निर्दिष्टमन्त्राक्षरा रक्षत्वद्रिसुता विवाहसमये प्रीतौ[12] च भीतौ[13] च वः ॥ ३० ॥ स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमादूर्ध्वश्वासपरिस्खलत्स्मरकथं संदष्ट[14]दन्तच्छदम् । सीत्कारा[15]ञ्चितलोचनं सपुलकं भ्रान्तभ्रु नृत्यत्करं पार्वत्यां सुरतं मुदे रसवतामास्तां मृडानीपतेः ॥ ३१ ॥ स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेर्भव । रोमाञ्चः[16] कथमेष देवि भगवन्गङ्गाम्भसां सीकरैरित्थं भर्तरि भाव[17]गोपनपरा गौरी चिरं पातु वः ॥ ३२ ॥ शम्या-

---

१ समीपवर्ती. २ भर्तुः. ३ चित्तविभ्रमः. ४ परशुरामात्. ५ कुबेरात्. ६ बलभद्रात्. ७ यमात्. ८ कृषकः. ९ स्कन्दः. १० गोनासादिसर्पभयनिवृत्तय इत्यर्थः. गोनासः सर्पजातिविशेषः. ११ वृद्धा. १२ यावज्जीवं कृततपसः फलोन्मुखत्वं समीक्ष्येत्यर्थः. १३ भूतगणादिसाहित्यमालोक्येत्यर्थः. १४ चुम्बितावित्यर्थः. १५ निमीलित. १६ रोमहर्षणम्. १७ स्वाभिप्राय.

कस्य रजः प्रमृज्य चरणे दत्तो मया यावको[1] निर्मृज्य स्तनकुड्मले च भसितं[2] पत्राङ्कुरो निर्मितः । स्वच्छन्दं विहरेति जल्पितगिरं साकूतमालीजनं दृष्ट्वा केवलमाघ्नती कुटिलया दाक्षायणी पातु वः ॥ ३३ ॥ वक्त्रं शीतकरोऽधरो घनरसः[3] कामप्रदो विग्रहः[4] श्वासो गन्धवहः सरोरुहसुहृत्पाणिः[5] स्मिताभा शुचिः[6] । वक्षः पीनपयोधरा[7]धिकरणं[8] पृथ्वी नितम्बस्थलीत्यष्टौ धूर्जटिमूर्तयः स्मरभयाद्दुर्गाश्रिताः पान्तु वः ॥ ३४ ॥ पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां शंभोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने । ह्रीमत्या शिरसीहितः[9] सपुलकस्वेदोद्गमोत्कम्पया विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥३५॥ कैलासालयभाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् । स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदा[10]नुकारसरसा सद्यः समुत्सार्यते ॥ ३६ ॥ लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम् । पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥ ३७ ॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ ३८ ॥ भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि । आर्ये मुञ्च विषादमाशु[11] कमले नाहं प्रकृत्या चला[12] चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ ३९ ॥ हे गङ्गाधरपत्नि चक्रिवधु किं कुत्रास्त्यसौ नर्तको वृन्दारण्यभुवि क्व सर्पकुतुकी स्यात्कालियस्य ह्रदे । भिक्षुः कुत्र गतोऽस्ति यज्ञसदने क्वासौ विषादी बकीक्रोडे स्यादिति पद्मजागिरिजयोर्वाग्भङ्गयः पान्तु वः ॥४०॥ वेणीबन्धकपर्दिनी सिततनुः श्रीखण्डपांशूत्करैः केतक्येकदलेन्दुभृद्बिसलताव्यालोपवीतिन्यपि । प्राक्पाणिग्रहणाद्विनोदरभसा सख्याः पुरो लीलया कुर्वाणानुकृतिं हरस्य दिशतु श्रेयांसि वः पार्वती ॥ ४१ ॥ यस्याङ्घ्रिद्वितयं नमन्ति विबुधाः स त्वेककः सर्ववित्तं मृत्युंजयमामनन्ति मुनयः सोऽद्यापि यातिव्रताः । इत्याकर्ण्य कथां रहस्यपि यया पत्युर्विवाहात्पुरा भङ्क्त्वाङ्गानि विजृम्भितं गिरिभुवो मोट्टायितं पातु वः ॥ ४२ ॥ संध्यारागवती स्वभावकुटिला गङ्गा द्विजिह्वः फणी वक्राङ्गैर्मलिनः शशी कपिमुखो नन्दी च मूर्खो वृषः । इत्थं दुर्जनसंकटे पतिगृहे वस्तव्यमेतत्कथं गौरीत्थं नृकपालपाणिकमला चिन्तान्विता पातु वः ॥ ४३ ॥ भिक्षार्थी स क्व यातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे मन्ये वृन्दाव-

---

१ लाक्षारस. २ भस्म. ३ उदकम्; (पक्षे) अधिकरसः. ४ शरीरम्. यजमानरूपम्. ५ कमलानां मित्रम्. सूर्य इत्यर्थः; (पाणिपक्षे) सरोरुहाणां सदृशा कान्तिर्यस्य. ६ अग्नि. ७ स्तनौ; (पक्षे) मेघाः. ८ स्थानम्. आकाशं मेघानां स्थानमिति प्रसिद्धम्. ९ इष्टः. १० रक्तोत्पलम्. ११ खेदम्; (पक्षे) विषमत्तीति विषादस्तं शिवम्. १२ चञ्चला; (पक्षे) लक्ष्मीः.

नान्ते क नु स मृगशिशुर्नैव जाने वराहम् । बाले कच्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां वः ॥ ४४ ॥ दीप्तक्षुद्वेगयोगाद्दद्नलहलहल्लम्बजिह्वाग्रलीढब्रह्माण्डक्षौद्रबिन्दुप्रबलतरभवज्जाठराग्निस्फुलिङ्गाम् । कालीं कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालां गुञ्जासंवादिनेत्रामजिननिवसनां नौमि पाशासिहस्ताम् ॥ ४५ ॥ उद्वाहारोपिताद्र्राक्षतनिजपदयोः संगतामिन्दुमौलावानम्रे यां सुधांशोर्व्यधित किल कलां तूर्णमेवान्नपूर्णाम् । सक्तानामक्षतानाममृतदृगनलापोधितः पक्वभावान्नानार्थैरन्नपूर्णा प्रणतजनततेः पूर्णतामातनोतु ॥ ४६ ॥ जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥ ४७ ॥ विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे । वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥ ४८ ॥ वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डलस्वच्छभासि स्वच्छायां साभ्यसूया त्वमियमिति मुहुः सत्यमाश्वासितापि । वामे मे दक्षिणेऽस्याः श्रवसि कुवलयं नाहमित्यालपन्ती दत्ताश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥ ४९ ॥ रामार्चिताङ्घ्रिरभिरामाकृतिः कृतविरामा सुपर्वविपदां कामार्तिहृत्सफलकामा निदेशरतकामादिनिर्जरवधूः । भीमा हरस्य नुतभीमा जपासदृशभा माननीयचरिता सा मामवत्वखिलसामादृतस्तुतिरसामान्यमुक्तिसुखदा ॥ ५० ॥ वालीयुतश्रवणपालीयुगा ललितचूलीविराजिबकुला केलीगतानुगमरालीकुला मधुरमालीभिराद्दतकथा । नालीकदृक्कुसुमनालीकपाणिरिह कालीयशासिसहजा तालदलाभतनुमाली सदा भवतु काली शुभाय मम सा ॥ ५१ ॥

---

## षण्मुखः ।

विकसदमरनारीनेत्रनीलाब्जखण्डान्यधिवसति सदा यः संयमाधःकृतानि । न तु रुचिरकलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥ १ ॥ अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुकेरङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्य दन्ताङ्कुरान् । एकं त्रीणि च सप्त पञ्च षडिति प्रध्वस्तसंख्याक्रमा वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥ २ ॥

---

१ जीर्णे. २ पलायिते. ३ पौरुषोपघ्नानां पराक्रमिणां निघ्न आयत्तस्तम्. ४ प्रभूतप्रभावा. ५ स्वप्रतिबिम्बम्. ६ सेर्ष्या. ७ कर्णे. ८ दैत्यकृतदेवविपत्तीनाम्. ९ स्त्री. १० क्रोधः. असुरवधकालोत्पन्न इत्यर्थः. ११ अरुणेत्यर्थः. १२ कर्णभूषणविशेषः. १३ केशपाशः. १४ सखीभिः. १५ कमलनयना. १६ पुष्पशरहस्ता. १७ कालीय. सर्पस्तं शास्तीति स कृष्णस्तत्सहजा भगिनी. यशोदोदरे दुर्गाप्रादुर्भावस्य भागवते प्रसिद्धत्वात्.

## हरिहरौ ।

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ । कामारिं कामतातं वा कंचिद्देवं भजामहे ॥ १ ॥ [1]अबलाढ्यविग्रहश्री[2]रमर्त्यनति[3]रक्षमालयोपेतः । [4]पञ्चक्रमोदितमुखः पाया[5]त्परमेश्वरो मुहु[6]र्रनादिः ॥ २ ॥ [7]गवीशपत्रो [8]नगजार्तिहारी [9]कुमारतातः [10]शशिखण्डमौलिः । [11]लङ्केशसंपूजित-पादपद्मः पाया[12]दनादिः [13]परमेश्वरो वः ॥ ३ ॥ स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्तद-वतु वपुरेकं कामकंसद्विषोर्वः । भवति गिरिसुतायाः सार्धमम्भोधिपुत्र्या सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ ४ ॥ संप्राप्तं [14]मकरध्वजेन [15]मथनं त्वत्तो मदर्थे पुरा तद्युक्तं [16]बहुमार्गगां मम पुरो निर्लज्ज वोढुस्तव । तामेवानुनयस्व-भावकुटिलां हे [17]कृष्णकण्ठ-ग्रहं मुञ्चेत्याह रुषा यमद्रितनया लक्ष्मीश्च पायात्स वः ॥ ५ ॥ यौ तौ शङ्खकपालभूषितकरौ माला-स्थिमालाधरौ देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ । द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ पापं वो हरतां सदा हरिहरौ श्रीवत्सगङ्गाधरौ ॥ ६ ॥ लोले ब्रूहि क-पालिकामिनि पिता कस्ते पतिः पाथसां कः प्रत्येति जलादपत्यजननं प्रत्येति यः [18]प्रस्त-रात् । इत्थं पर्वतसिन्धुराजसुतयोराकर्ण्य वाक्चातुरीं संस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तु वः ॥ ७ ॥ यस्मादासीत्कुमारः कुवलयदलवल्लीलयोवाह गङ्गां [19]वामा यस्याङ्ग-सङ्गा पिहितजनचयो यो गवीशध्वजोऽपि । लङ्केशाद्येकनाथो [20]हिमंकररुचिभृद्भूविशे-षाश्रमोऽसौ वर्णस्याद्यस्य लोपादपहरतु हरिः पातकं वः स्मरारिः ॥ ८ ॥

---

## त्रिमूर्तयः ।

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने । गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ १ ॥ नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते । अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ २ ॥ रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशहे-तवे त्रयीमयाय त्रिगुणात्मने नमः ॥ ३ ॥ श्यामश्वेतारुणाङ्गा जलधरणिधरोत्फुल्लपङ्केरु-

---

१ पार्वत्यर्धाङ्गीकरणात्; (पक्षे) बलाढ्यो बलिष्ठः. २ देवसपूजितः; (पक्षे) मृत्युलोकसंपूजितः. तस्य रक्षणात्. ३ अक्षमाला जपमाला; (पक्षे) क्षमालय पृथ्वी. ४ पञ्चाननः, (पक्षे) चक्रेण मोदितं मुख यस्य सः. ५ परमेश्वरः शिव ; रमेश्वरो विष्णुः. ६ न विद्यते आदिर्यस्य सः; (पक्षे) आद्यवर्णरहितः. ७ ग-वीशो वृषो वाहन यस्य; (पक्षे आद्याक्षरस्य लोपात् ) वीशो गरुडो वाहन यस्य. ८ पार्वतीदुःखनाशकः; (पक्षे) गजेन्द्रपीडाहारकः. ९ कार्तिकेयपिता; (पक्षे) मदनपिता. १० चन्द्रः शिरसि यस्य; (पक्षे) मयूरपि-च्छानि शिरसि यस्य. ११ रावणपूजितचरणकमलः; (पक्षे) को ब्रह्मा, ईश. शिव , एताभ्यां पूजितपाद-पद्मः. १२ न विद्यत आदिर्यस्य सः; (पक्षे) आद्याक्षरशून्यः १३ शिवः; (पक्षे) विष्णुः. १४ शिवपक्षे मदनेन; विष्णुपक्षे समुद्रेण. १५ विनाशः; (पक्षे) विलोडनम्. १६ नदीम् गङ्गामित्यर्थः; (पक्षे) वेश्याम्. कंसस्य कुब्जां दासीमित्यर्थः. १७ कृष्णकण्ठ नीलकण्ठ ग्रह निर्बन्धं मुञ्च; (पक्षे) कृष्ण कण्ठग्रहं मत्कण्ठग्रह मुञ्च. १८ पाषाणात्. पार्वत्या. पर्वतगर्भसंजननत्वात्. १९. स्त्री; (पक्षे) मा लक्ष्मीः. २० चन्द्रः; (पक्षे) मीनः.

हस्था मोमासावित्र्युपेता रेथचरणपिनाकोग्रहुंकारशस्त्राः । देवा द्विव्यष्टनेत्रा जगदवनसमुच्छेदनोत्पत्तिदक्षाः प्रीता वः पान्तु नित्यं हरिहरविधयस्तार्क्ष्यगोहंसपत्राः ॥ ४ ॥

---

## विष्णुः ।

आदिमध्यान्तरहितं दशाहीनं पुरातनम् । अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥ १ ॥ जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् । मध्येपयः पयोधेरपर इवाम्भोनिधिः कृष्णः ॥ २ ॥ अतिविपुलं कुचयुगलं रहसि करैरामृशन्मुहुर्लक्ष्म्याः । तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ॥ ३ ॥ जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीजः । दामोदरो निजोदरगह्वरनिर्विष्टजगदण्डः ॥ ४ ॥ श्रीकरपिहितं चक्षुः सुखयतु वः पुण्डरीकनयनस्य । जघनमिवेक्षितुमागतमब्जनिभं नाभिसुषिरेण ॥ ५ ॥ श्यामं श्रीकुचकुङ्कुमपिञ्जरितमुरो मुरद्विषो जयति । दिनमुखनभ इव कौस्तुभविभाकरो यद्विभूषयति ॥ ६ ॥ प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः । पुरुषायितमभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुरमिव ॥ ७ ॥ केलिचलाङ्गुलिलम्भितलक्ष्मीनाभिर्मुरद्विषश्चरणः । स जयति येन कृता श्रीरनुरूपा पद्मनाभस्य ॥ ८ ॥ रोमावली मुरारेः श्रीवत्सनिवेशिताग्रभागा वः । उन्नालनाभिनलिनच्छायेवोत्तापमपहरतु ॥ ९ ॥ कमलाकुचकनकाचलजलधरमाभीरसुन्दरीमदनम् । अधिततशेषफणावलिकमलवनभृङ्गमच्युतं वन्दे ॥ १० ॥ जीयादम्बुधितनयाधररसमास्वादयन्मुरारिरयम् । अम्बुधिमथनक्लेशं कलयन्विफलं च सफलं च ॥ ११ ॥ श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति । नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ॥ १२ ॥ वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य । श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव ॥ १३ ॥ वृन्दारका यस्य भवन्ति भृङ्गा मन्दाकिनी यन्मकरन्दबिन्दुः । तवारविन्दाक्ष पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥ १४ ॥ जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया । दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ १५ ॥ पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य । व्यक्तानुरागमिव खेलदनङ्गखेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ १६ ॥ श्रेयः सदा दिशतु सालसपक्ष्मपाते निद्रायिते अपि दृशौ भृशमुन्नमय्य । संवाह्यमानचरणा-

---

१ मा लक्ष्मीः; उमा पार्वती. २ चक्रम्. ३ गरुडः. ४ वस्त्रस्य प्रान्तभागस्थाः सूत्रवर्तिकाः. ५ लक्ष्मीः. ६ रतरीतिवसनविहीनतया लज्जावशादिति भावः. ७ पिहितेऽपि चक्षुर्गोलकेऽन्यमार्गेण पुण्डरीकनयनमुत्पादयित्वा जघनविलोकनं कृतमित्यर्थः. ८ रन्ध्रम्. ९ रक्तीकृतम् दृढालिङ्गनादिति भावः. १० प्रातःकालीननभसः स्वतो नीलिमत्वात्. ११ कौस्तुभमणिरेव सूर्यो यस्मिन्. १२ विपरीतरतम्. १३ दर्पणम् १४ स्पृष्टः. १५ चरणरूपपद्मनाभित्वेनेति भावः. १६ रोमावल्यां नालच्छायोत्प्रेक्षा. श्रीवत्से च नलिनच्छायोत्प्रेक्षा. १७ महासंतापम्. १८ भृङ्गः. १९ निकषग्रावा. २० सुरतायासः.

म्बुजजातहर्षो लक्ष्मीमुखेक्षणपरः परमेश्वरो वः ॥ १७ ॥ सकलभुवनबन्धोर्वैरमिन्दोः सरोजैरनुचितमिति मत्वा यः स्वपादारविन्दम् । घटयितुमिव मायी योजयत्याननेन्दौ वटदलपुटशायी मङ्गलं वः कृषीष्ट ॥ १८ ॥ कचकुचचुबुकाग्रे पाणिषु व्यापृतेषु प्रथमजलधिपुत्रीसंगमेऽनङ्गधाम्नि । ग्रथितनिबिडनीवीबन्धनिर्मोचनार्थं चतुरधिककराशः पातु वश्चक्रपाणिः ॥ १९ ॥ विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मभूः । किमधिकरणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥ २० ॥ लक्ष्मीपाणिद्वयविरचितं मूलमूर्धं श्रुतीनां व्यक्तं वन्दे चरणकमलद्वन्द्वमाद्यस्य पुंसः । यत्रैकस्य व्यधित वलिना पाद्यतोयैर्वितीर्णैरार्द्रस्यैव प्रणतितरलः क्षालनं पद्मयोनिः ॥ २१ ॥ अनादृतचमूपतिप्रहितहस्तमस्वीकृतप्रणीतमणिपादुकं किमिति विस्मितान्तःपुरम् । अवाहनपरिष्क्रियं पतगराजमारोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः॥२२॥ दृक्पातः [1]कमलासनेऽस्तु भवतु ज्ञानं मनाग्[2]मारुते श्री[3]कण्ठोऽयमितः सुरानिति नतांस्तार्क्ष्येण विज्ञापितः । प्रेयस्याः क्व तदासनं क्व च रुतं कण्ठः क्व चेत्युल्लसल्लक्ष्म्यावासितमानसो विजयते सुप्तप्रबुद्धो हरिः ॥ २३ ॥ निर्मग्नेन मयाम्भसि स्मरभरार्दालिः समालिङ्गिता के[4]नालीकमिदं[5] तवाद्य कथितं राधे मुधा ता[6]म्यसि[7] । इत्युत्स्वप्नपरम्परासु शयने श्रुत्वा वचः शार्ङ्गिणः सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ॥ २४ ॥ यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः । अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ २५ ॥ येनोत्थाप्य समूलमन्दरगिरिश्छत्त्रीकृतो गोकुले राहुर्येन महाबलो सुररिपुः कार्यादशेषीकृतः । कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया सोऽयं पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ २६ ॥ मुग्धे मुञ्च वि[8]षादमत्र [9]बलभित्कम्पो [9]गुरुस्त्यज्यतां [10]सद्भावं भज [11]पुण्डरीकनयने मान्यानिमान्मानय । इत्थं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छलादन्यत्र प्रतिषेधमात्मनि विधिं शृण्वन्हरिः पातु वः ॥ २७ ॥ नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णनप्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः । सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः सोत्प्रासप्रणयं सरोजवसतिं पश्यन्हरिः पातु वः ॥ २८ ॥ निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने । याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो नाभीपल्वलपुण्डरीकमुकुलः [12]कम्बोः सपत्नीकृतः ॥ २९ ॥ [13]भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्याना-

---

१ ब्रह्मणि; (पक्षे) लक्ष्म्या आसने. २ वायौ; (पक्षे) लक्ष्म्या. शब्दे. ३ शिवः; (पक्षे) लक्ष्म्याः कण्ठः. ४ सखी. ५ असत्यम्. ६ कुप्यसि. ७ खेदम्; (पक्षे) शिवम्. ८ बलं भिनत्तीति तम्; (पक्षे) इन्द्रम्. ९ बहु; (पक्षे) बृहस्पतिः. १० सुष्ठुभावम्; (पक्षे) सद्भावेन. ११ कमललोचने; (पक्षे) विष्णौ. १२ शङ्खस्य. १३ भक्तिप्रह्वादिविशेषणानि नेत्रपक्षे तनुपक्षे च क्रमेण द्विवचनैकवचनान्तानि.

लम्बनतां समाधिनिरतैर्नीते[1]हितप्राप्तये । लावण्यैकमहानिधौ रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा[2] हरेः ॥ ३० ॥ चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः । भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ ३१ ॥ आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरीधीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः । लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथादायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ ३२ ॥ भ्राम्यन्मन्दरकन्दरोदरदरीव्यावृत्तिभिर्वारिधेः कल्लोलैरलमाकुलं[3] कलयतो लक्ष्म्या मुखाम्भोरुहम् । औत्सुक्यात्तरलाः स्मराद्विकसिता भीत्या[3] समाकुञ्चिताः क्रोधेन ज्वलिता मुदा मुकुलिताः शौरेर्दृशः पान्तु वः ॥ ३३ ॥ पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे संक्रान्त[4]प्रतिबिम्बसंवलनया बिभ्रद्वपुर्विक्रियाम् । पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूह[5]मिवाचरन्नुपचिताकूतो[6] हरिः पातु वः ॥ ३४ ॥ प्रत्यग्रोन्मेषै[7]र्जिह्मा[8] क्षणमनभिमुखी [9]रत्नदीपप्रभाणामात्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः । नागाङ्कं[10] मोक्तुमिच्छोः शयनमुरु[11] फणाचक्रवालो[12]पधानं निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा[13] वः ॥ ३५ ॥ श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलोलल्लीलाब्जान्निःसरन्ती मधुरमधुझरी नाभिपद्मे मुरारेः । [14]अस्तोकं लोकमात्रा द्वियुग[15]मुखशिशोराननेष्वर्प्यमाणं शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥३६॥

**गरुडः** ॥ सौवर्णाङ्कितपत्रमारुतहृताहिव्रातकान्ताकुचस्फूर्जन्मौक्तिकभूषणः खगपतिः पूर्णेन्दुबिम्बाननः । पद्माधीश्वरपादपद्मयुगलस्पर्शामलाङ्गानतः पायाद्वो विनतासुतो हरिकृपालोकैकपात्रीकृतः ॥ ३७ ॥

**शेषः** ॥ ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि । स्फारे यत्फणचक्रे धरा शरावश्रियं वहति ॥ ३८ ॥

---

## लक्ष्मीः ।

जयन्ति जगतां मातुः स्तनकुङ्कुमबिन्दवः । मुकुन्दाश्लेषसंक्रान्तकौस्तुभश्रीविडम्बिनः ॥ १ ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः । यत्र संक्रान्तबिम्बेन हरिणा [16]हरिणायितम् ॥ २ ॥ देवेऽर्पितवरणस्रजि बहुमाये वहति कैटभीरूपम् । जयति सुरासुरहसिता

---

१ नीता ईहितप्राप्तये इति तनुपक्षे छेदः. २ पश्यतः. ३ अदत्तपरपुत्रिकाप्रार्थकत्वेन. ४ संबद्ध. ५ बहुशरीरताम्. ६ समृद्धकामभावः. ७ उन्मीलनम्. ८ कुटिला. ९ शेषशिरःस्थानामित्यर्थः. १० शेषनागक्रोडरूपम्. ११ बृहत्. १२ मण्डल. १३ ईषत्संकुचिता. १४ बहु. १५ ब्रह्मणः. १६ हरिण इवाचरितम्.

लज्जाजिह्मेक्षणा लक्ष्मीः ॥ ३ ॥ तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति। फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ ४ ॥ स्मेराननेन हरिणा सस्पृहमाकारवेदिनाकलितम्। जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ ५ ॥ कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः। नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥ ६ ॥ किञ्जल्कराजिरिव नीलसरोजलग्ना लेखेव काञ्चनमयी निकषोपलस्था। सौदामनी जलदमण्डलगामिनीव पायादुरःस्थलगता कमला मुरारेः ॥ ७ ॥ दन्तैः कोरकिता स्मितैर्विकसिता भ्रूविभ्रमैः पत्रिता दोर्भ्यां पल्लविता नखैः कुसुमिता लीलाभिरुद्वेलिता। उत्तुङ्गस्तनमण्डलेन फलिता भक्ताभिलाषे हिता काचित्कल्पलता सुरासुरनुता पायात्सुधाब्धेः सुता ॥ ८ ॥ उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारिद्युति। लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ ९ ॥ आख्याते हसितं पितामह इति त्रस्तं कपालीति च व्यावृत्तं गुरुरित्ययं दहन इत्याविष्कृता भीरुता। पौलोमीपतिरित्यसूयितमथ व्रीडाविनम्रश्रिया पायाद्वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥ १० ॥ क्रीडाभिन्नहिरण्यशुक्तिकुहरे रक्तात्मनावस्थितान्हारं हारमुदारकुङ्कुमरसानव्याजभव्यान्नखैः। वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावलीस्तत्कालोचितभावबन्धमधुरं मन्दस्मितं पातु वः ॥ ११ ॥ पद्मायाः स्तनहेमसद्मनि मणिश्रेणीसमाकर्षके किंचित्कञ्चुकसंधिसंनिधिगते शौरेः करे तस्करे। सद्यो जागृहि जागृहीति वलयध्वानैर्ध्रुवं गर्जता कामेन प्रतिबोधिताः प्रहरिका रोमाङ्कुराः पान्तु वः ॥ १२ ॥ यादृग्जानासि जाम्बूनदगिरिशिखरे कान्तिरिन्दोः कलानामित्यौत्सुक्येन पत्यौ स्मितमधुरमुखाम्भोरुहं भाषमाणे। लीलादोलायमानश्रुतिकमलमिलद्भृङ्गसंगीतसाक्षी पायादम्भोधिजायाः कुसुमशरकलानाट्यनान्दीनकारः ॥ १३ ॥ उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः। भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १४ ॥

**समुद्रः** ॥ वत्से मा गा विषादं[1] श्वसनमुरुजवं[2] संत्यजोर्ध्वप्रवृत्तं[3] कम्पः[4] को वा गुरुस्ते[5] किमिह बलभिदा[6] जृम्भितेनात्र[7] याहि। प्रत्याख्यानं[8] सुराणामिति भयशमनच्छद्मना[9] कारयित्वा यस्यै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमुग्धः पयोधिः ॥ १५ ॥

---

१ खेदम्; (पक्षे) हरम्. २ श्वासम्; (पक्षे) पवनम्. ३ महावेगम्. ४ कं जलं पातीति तथा वरुणः; (पक्षे) कम्पः. ५ महान्; (पक्षे) बृहस्पतिः. ६ बल प्रसिद्धं तद्भिदा नाशकेन; (पक्षे) बलाख्यदैत्यनाशकेनेन्द्रेण. ७ श्रीकृष्णसंनिधौ. ८ वर्जनम्. ९ भयनिवारणव्याजेन.

## ब्रह्मा ।

तं वन्दे पद्मसद्मानमुपवीतच्छटाछलात् । गङ्गास्रोतस्त्रयेणैव यः सदैव निषेव्यते ॥ १ ॥ कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः । घोरितविततालिरुतो नाभिसरोजे विधिर्जयति ॥ २ ॥

---

## दशावताराः ।

वेदानुद्धरते जगन्निवहते भूलोकमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते । पौलस्त्यं जयते हलं[1] कलयते[2] कारुण्यमातन्वते म्लेच्छान्मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ १ ॥ यस्यालीयत शल्क[3]सीम्नि जलधिः पृष्ठे जगन्मण्डलं दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी । क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥ २ ॥ पाठीनः[5] कमठः [6]किटिर्नरहरिः खर्वाकृतिर्भार्गवो रामः कंसनिषूदनो दशबलः[7] कल्की च नारायणः । युष्माकं स विभूतयेऽस्तु भगवान्सेतुर्भवाम्भोनिधावुत्ताराय युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ ३ ॥ वेदा येन समुद्धृता वसुमती पृष्ठे धृताप्युद्धृता दैत्येशो नखरैर्हतः फणिपतेर्लोकं बलिः प्रापितः । क्ष्माक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी हिंसा दोषवती धराप्ययवना पायात्स नारायणः ॥ ४ ॥

**मत्स्यः** ॥ मग्ने मेरौ पतति तपने तोयबिन्दाविवेन्दावन्तर्लीने जलधिसलिले व्याकुले देवलोके । मात्स्यं रूपं मुखपुटतटाकृष्टनिर्मुक्तवार्धि श्रीकान्तस्य स्थलजलगतं वेत्यलक्ष्यं पुनातु ॥ ५ ॥ वियत्पुच्छोत्तुच्छोच्छलितजलगर्भं निधिरपामपांनाथः पाथः[9]पृथुल[10]लवदुःस्थो[11] वियदभूत् । [12]निधिर्भासामौर्वो[13] दिनपतिरभूदौर्वदहन[14]श्चलत्काये यस्मिन्स जयति हरिर्मीनवपुषा ॥ ६ ॥ जीयासुः शकुलाकृते[15]र्भगवतः पुच्छच्छटाछोटना[16]दुद्यन्तः[17] शतचन्द्रिताम्बरतलं ते बिन्दवः सैन्धवाः । यैर्व्यावृत्य पतद्भिरौर्वशिखिनस्तेजोजटालं[18] वपुः पाना[19]ध्मानवशाद्दरो[20]चकरुजां चक्रे चिरायास्पदम्[21] ॥ ७ ॥ दिश्याद्वः शकुलाकृतिः स भगवान्नैःश्रेयसीं संपदं यस्य स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलन[22]क्रीडनैः । क्षुभ्यद्वार्धिसमुच्छलज्जलभरैर्मन्दाकिनीसं-

---

१ लाङ्गलम्. २ धारयते. ३ त्वक्. ४ खड्गे. ५ मत्स्यः. ६ वराहः. ७ बुद्धः. ८ बहु. ९ उदकम्. १० विपुलः. ११ दरिद्रः. १२ सूर्यः. १३ वडवानलः. यदा पानीयं मीनाकृत्या भगवता स्वपुच्छेनोच्छालितं तदा सर्वमपि सामुद्रं जलं वियति गतम्. तत्र च रविर्वर्तत एव. स वडवानलाकृत्या दृश्यत इत्यर्थः. १४ समुद्रे पानीयाभावात्समुद्रस्याकाशकल्पना. तत्र च वाडवाग्नेः सूर्योपमेति भावः. १५ मत्स्याकृतेः. १६ इतस्तत आलोडनम्. १७ ऊर्ध्वं गच्छन्तः. १८ तेजोव्याप्तम्. १९ अग्निसंयोगाभावः. २० अरुचिरोगाणाम्. २१ यो निदाघज्वरादिरुगाक्रान्तो बहुपानीयं पिबति तस्य पश्चात्पानीयस्यारुचिर्जायते तथैतस्य वाडवाग्नेरपीति भावः. २२ दोला.

गतैर्गङ्गासागरसंगमप्रणयिनी जाता विहायःस्थली[1] ॥ ८ ॥ मायामीनतनोस्तनोतु भवतां पुण्यानि पङ्कस्थितिः पुच्छाच्छोटसमुच्छलज्जलगुरुप्राग्भाररिक्तोदधेः। पातालावटमध्यसंकटतया पर्याप्तकष्टस्थितेर्वेदोद्धारपरायणस्य सततं नारायणस्य प्रभोः ॥ ९ ॥ जृम्भाविस्तृतवक्त्रपङ्कजविधेर्हृत्वा श्रुतीः सागरे लीनं त्रस्तसमस्तनक्रनिकरं शङ्खं जघानाजिरे। पुच्छोत्क्षिप्तजलोत्करैः प्रतिदिशं संतर्प्य यो वै धरां पायाद्वः स मृणालकोमलतनुर्मीनाभिधानो हरिः ॥ १० ॥ हंहो मीनतनो हरे किमुदधे किं वेपसे शैत्यतः स्विन्नः किं वडवानलात्पुलकितः कस्मात्स्वभावादहम्। इत्थं सागरकन्यकामुखशशिन्यालोकनेनाधिकप्रोद्यत्कामजचिह्ननिर्हुतिपरः शौरिः शिवायास्तु वः ॥ ११ ॥ पुच्छं चेदहमुन्नयाम्यनवधिस्तुच्छो भवेदम्बुधिः क्रीडां चेत्कलये मनागपि जले पीडा परं यादसाम्। निस्पन्दो भृशमामृशन्निति भरब्रह्माण्डभाण्डक्षयक्षोभाकुञ्चितवेष एष भगवान्प्रीणातु मीनाकृतिः ॥ १२ ॥ चन्द्रादित्योरुनेत्रः कमलभवभवस्फारपृष्ठप्रतिष्ठो भास्वत्कालाग्निजिह्वः पृथुलगलगुहादष्टनिःशेषविश्वः। अद्भिः पुच्छोत्थिताभिश्चकितसुरवधूनेत्रसंसूचिताभिर्मत्स्यश्छिन्नाब्धिवेलं गगनतलमलं क्षालयन्वः पुनातु ॥ १३ ॥ यं दृष्ट्वा मीनरूपं स्फुरदनलशिखायुक्तसंरक्तनेत्रं लोलद्विस्तीर्णकर्णक्षुभितजलनिधिं नीलजीमूतवर्णम्। श्वासोच्छ्वासानिलौघैः प्रचलितगगनं पीतवारिं मुरारिं दिङ्मूढोऽभूत्स शङ्खः स भवतु भवतां भूतये मीनरूपः ॥ १४ ॥ दिङ्मूढं तं सुरारिं किल शितदशनैः पीड्यमानं रटन्तं हत्वा तीरे पयोधेः करतलकलितं पूरयामास शङ्खम्। नादेनाक्षोभ्य विश्वं प्रमुदितविबुधं त्रस्तदैत्यं स देवैर्दत्तार्घः पद्मयोनेः प्रहसितवदनः पातु वो दत्तवेदः ॥ १५ ॥

कूर्मः ॥ निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम्। प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ १६ ॥ नमस्कुर्मः कूर्मं नमदमरकोटीरनिकरप्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठवपुषम्। जरीजृम्भद्भिर्म्भिद्युमणिरमणीयांशुलहरीपरीरम्भस्फूर्जद्बलभिदुपलाद्रिप्रतिभटम् ॥ १७ ॥ निष्प्रत्यूहमनल्पकल्पचरितस्त्रैलोक्यरक्षागुरुः क्रीडाकूर्मकलेवरः स भगवान्दिश्यादमन्दां मुदम्। कल्पान्तोदधिमध्यमज्जनवशाद्व्यासर्पतः संलुठत्पृष्ठे यस्य बभूव सैकतकणच्छायं धरित्रीतलम् ॥ १८ ॥ पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनैर्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः। यत्संस्कारकलानुवर्तनवशाद्वेलाछलेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि वि-

---

१ आकाशस्थली. यतः सागरजलं मत्स्यपुच्छेनोच्छालित सुरनद्याः सङ्गमवाप ततो गङ्गासागरसगमतीर्थं नभस्यपि जज्ञ इति भावः. २ उल्लोलनम्. ३ भूरन्ध्रम्. ४ संकीर्णतया. ५ वेदान्. ६ रणाङ्गणे. ७ भृत्वा. ८ अपलपनम्. ९ गरिष्ठ. १० ब्रह्मणो जातम्. ब्रह्माण्डमित्यर्थः. ११ सविस्मय दृष्टाभिः. १२ व्याकुल. १३ तीक्ष्णदन्तैः. १४ वादयामास. १५ अवस्थानम्. १६ मुकुटः. १७ लोहितम्. १८ अतिशयेन विकसन्. १९ तरुणः. २० सूर्यः. २१ इन्द्रनीलपर्वतसदृशम्. २२ आकुञ्चनप्रसारणादि.

श्राम्यति ॥ १९ ॥ दृग्भ्यां यस्य विलोकनाय जगतो द्रागीषदुत्तोलितग्रीवायोपरि वि-
स्फुरद्ग्रहगणे छत्रायितायां भुवि । हा दिग्भूः किमभूद्भूतादितरात्किं चेति पर्याकुलो हन्या-
देष हठादघानि कमठाधीशः कठोराणि वः ॥ २० ॥ यो धत्ते[1] शेषनागं तदनु[2] वसुमतीं स्वर्ग-
पातालयुक्तां युक्तां सर्वैः समुद्रैर्हिमगिरिकनकप्रस्थमुख्यैर्नगेन्द्रैः । एतद्ब्रह्माण्डमस्यामृतघट-
सदृशं भाति वंशे[3] मुरारेः पायाद्वः कूर्मदेहः प्रकटितमहिमा माधवः कामरूपी ॥ २१ ॥

**वराहः** ॥ हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः । हेमाद्रिकलसा यत्र धात्री छत्र-
श्रियं दधौ ॥ २२ ॥ स जयति महावराहो जलनिधिजठरे चिरं निमग्नोऽपि । येनान्त्रैरिव
सह फणिगणैर्बलादुद्धृता धरणी ॥ २३ ॥ पातु वः कपटकोल[4]केशवो यस्य निश्वसितमारुतो-
द्धता । उच्छ्रितिप्रपतनैर[5]चीक्लृपत्केलि[6]कन्दुकतुलामिला मुहुः ॥ २४ ॥ न पङ्कैरालेपं कल-
यति धरित्री[7]व्ययभयान्न मुस्तामादत्तेऽप्युरगनगरभ्रंशभयतः । न धत्ते ब्रह्माण्डस्फुटनस-
घृणो घर्घररवं महाक्रोडः पायादिति सकलसंकोचितमुखः ॥ २५ ॥ पातु त्रीणि जगन्ति
संततम[8]कूपारात्समभ्युद्धरन्धात्रीं कोलकलेवरः स भगवान्यस्यैकदंष्ट्राङ्कुरे । कूर्मः क[9]न्दति
ना[10]लति द्विरसनः प[11]त्रन्ति दिग्दन्तिनो मेरुः को[12]शति मेदिनी ज[13]लजति व्योमापि रो[14]-
लम्बति ॥ २६ ॥ पातु श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरःस्थलो देवो वः स जगत्पति-
म[15]धुवधूवक्त्राब्जचन्द्रोदयः । क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भूर्भाति स्म प्रल-
याब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ २७ ॥ दृप्यद्दैत्यनितम्बिनीजनमनःसंतोषसंकोचनः
कुर्याद्विश्वमनश्वरं स भगवान्क्रोडावतारो हरिः । यद्दंष्ट्राङ्कुरकोटि[16]कोटर[17]कुटीकोणान्तरस्थे-
यसी पृथ्वी भात्य[18]वदातकेतकदलालीनेव भृङ्गाङ्गना ॥ २८ ॥ अष्टौ यस्य दिशो दलानि
विपुलः कोशः सुवर्णाचलः कान्तं केसरजालमर्ककिरणा भृङ्गाः पयोदावली । नालं
शेषमहोरगः प्रविततं वारांनिधेर्लीलया तद्वः पातु समुद्धरन्[19]कुवलयं क्रोडाकृतिः केशवः
॥ २९ ॥ बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया क्रोडाकारधरो हरिः स भग-
वान्भूयाद्विभूतिप्रदः । यस्योत्क्षिप्तवतः क्षमाकमलिनीमालम्बमानः क्षणं लोलद्वालमृणाल-
नालतुलनां भेजे भुजङ्गेश्वरः ॥ ३० ॥ मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी कुक्षौ
क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात् । इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लु-
ठन्तो मुहुः क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥ ३१ ॥ भूयादेष सतां

---

१ पृष्ठ इति शेषः. २ तदुपरि. ३ पृष्ठवंशे. ४ वराहः. ५ अकरोत्. ६ यथा कन्दुकः क्री-
डया शिशुभिरुत्क्षिप्यतेऽपक्षिप्यते च तथेयं भूरपि श्वासवायुप्रेरितोर्ध्वाध:पतनैः कन्दुकतुलां तुलयतीति भावः.
७ यद्यहं धरित्र्यां सामुद्रे पङ्के लुठिष्यामि तदेयं भूर्मद्वपुष्येव विलयं यास्यतीति विचार्य. ८ समुद्रात्. ९ कन्द
इवाचरति. १० नालमिवाचरति. ११ पत्राणीवाचरति. १२ कोरक इवाचरति. १३ कमल इवाच-
रति. १४ भ्रमर इवाचरति. १५ यथा चन्द्रोदयेऽब्जानि सकोचमाप्नुवन्ति तथा हरेरुदयान्मधुवधूवक्त्राम्भो-
रुहाणि निःश्रीकाण्यभवन्निति भावः १६ अग्रम्. १७ निष्कुहभवनम्. १८ उज्वलम्. १९ पृथ्वी-
मण्डलम्; (पक्षे) नलिनम्.

हिताय भगवान्कोलावतारो हरिः सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते नटन्त्या भुवः । तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति क्रीडादर्पणति क्षपापतिरहर्देवश्च ताटङ्कति ॥ ३२ ॥ लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि नष्टे श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्धपीते । पोत्रप्रान्तैकरोमान्तरविवरगतां मार्गतश्चक्रपाणेः क्रोडाकारस्य पृथ्वीमकलितविभवं वैभवं वः पुनातु ॥ ३३ ॥ सिन्धुष्वङ्गावगाहः खुरविवरविशत्तुच्छतोयेषु नाप्तः प्राप्ताः पातालपङ्के न लुठितरुचयः पोत्रमात्रोपयोगात् । दंष्ट्राविष्टेषु नाप्तः शिखरिषु च पुनः स्कन्धकण्डूविनोदो येनोद्धारे धरित्र्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ ३४ ॥

**नृसिंहः ॥** शत्रोः प्राणानिलाः पञ्च वयं दश जयोऽत्र कः । इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥ ३५ ॥ प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाछटः । श्वासाक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥ ३६ ॥ व्याधूतकेसरसटाविकरालवक्त्रं हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् । आविष्कृतं सपदि येन नृसिंहरूपं नारायणं तमपि विश्वसृजं नमामि ॥ ३७ ॥ वपुर्दलन[2]संभ्रमात्स्वनखरं प्रविष्टे रिपौ क्व यात इति विस्मयात्प्रहितलोचनः सर्वतः । वृथेति करताडनान्निपतितं पुरो दानवं निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥ ३८ ॥ चटच्चटिति चर्मणि च्छूमिति चोच्छलच्छोणिते धगद्धगिति मेदसि स्फुटरवोऽस्थिनि ष्टागिति । पुनातु भवतो हरेरमरवैरिवीरोरसि क्वणत्कर[4]जपञ्जरक्रकच[5]घर्षजन्मानलः ॥ ३९ ॥ ससत्वरमितस्ततस्तत[6]विहस्तहस्ताटवीनिकृत्तसुरशत्रुहृत्क्षतजसिक्तवक्षःस्थलः । स्फुरद्धरगभस्तिभिः स्थगित[9]संप्तसप्तिद्युतिः समस्तनिगमस्तुतो नृहरिरस्तु नः स्वस्तये ॥ ४० ॥ चञ्चच्चण्डनखाग्रभेद[12]विगलद्दैत्येन्द्रवक्षःक्षरद्रक्ता[13]भ्यक्तसुपाटलोद्भटसटासंभ्रान्तभीमाननः । तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभवद्दिग्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥ ४१ ॥ दंष्ट्रासंकट[14]वक्त्रकन्दरलसज्जिह्वस्य हव्याशनज्वालाभासुरभूरिकेसरसटाभारस्य दैत्यद्रुहः । व्यावल्गद्बलवद्धिरण्यकशिपुक्रोड[15]स्थलास्फालनस्फारप्रस्फुटदस्थिपञ्जरवक्रूरा नखाः पान्तु वः ॥ ४२ ॥ सोमार्धायितनिष्पिधानदशनः संध्यायितान्तर्मुखो बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः । अन्तर्नादनिरोधपीवरगलत्सर्व[16]कूपनिर्यत्तडित्तारस्फारसटावरुद्धगगनः पायान्नृसिंहः स वः ॥ ४३ ॥ विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः शोण[17]न्नेत्रहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः । विस्फूर्जद्घनगर्जितर्जितककुम्मातङ्गदर्पोदयाः संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विषद्वक्षसः ॥ ४४ ॥ दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि स्फारीभूतकरालकेसरसटासंघातघोराकृतेः ।

---

१ वराहमुखाग्रे. २ विदारणम्. ३ भयात्. ४ नखाः. ५ करपत्रकम्. ६ विस्तीर्णौ. ७ व्याकुलौ. ८ रुधिरम्. ९ आच्छादिता. १० सूर्यः. ११ वेदाः. १२ विदारणम्. १३ सिक्ताः. १४ संकीर्णे. १५ उत्सङ्गस्थलम्. १६ रोमकूपाः. १७ रक्तीभवन्.

सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्तःस्मितं क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ ४५ ॥ किं किं सिंहस्ततः किं[1] नरसदृशवपुर्देव चित्रं गृहीतो नैतादृक्क्वापि जीवोऽद्भुतमुपनय मे देव संप्राप्त एषः । चापं चापं न चापीत्यहहहहहहा कर्कशत्वं नखानामित्थं दैत्येन्द्रवक्षः खरनखमुखरैर्जघ्निवान्यः स वोऽव्यात् ॥ ४६ ॥ भूयः कण्ठावधूतिव्यतिकरतरलोत्तंसै[3]नक्षत्रमालाबालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी । अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥ ४७ ॥ अन्तःक्रोधोर्जिहानज्वलनभवशिखाकारजिह्वावलीढप्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः । दृप्यत्पारीन्द्र[4]मूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिः कुर्वन्निर्धूमधूम[6]ध्वजनिचितमिव[7] व्योम रोमच्छटानाम् ॥ ४८ ॥ पायान्मायामृगेन्द्रो जगदखिलमसौ यत्तनूदर्चिरर्चिज्वालाजालावलीढं बत भुवि सकलं व्याकुलं किं न भूयात् । न स्याच्चेदाशु तस्याधिकविकटसटाकोटिभिः पाट्यमानादिन्दोरानन्दकन्दात्तदुपरि तुहिनासारसंदोहवृष्टिः ॥ ४९ ॥

**वामनः ॥** अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिर्ग्रहे[8] । विधिविष्टर[9]पद्मस्य नालदण्डो मुदेऽस्तु नः ॥ ५० ॥ खर्वग्रन्थिविमुक्तसंधि विलसद्वक्षःस्फुरत्कौस्तुभं निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसा[10]मध्वनि । पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं पायाद्वः[11] क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ ५१ ॥ हस्ते शस्त्रकिणाङ्कितोऽरुणविभाकिर्मीरितोरःस्थलो नाभिप्रेङ्खद्दलिर्विलोचनयुगप्रोद्भूतशीतातपः । बाहूर्मिश्रितवह्निरेष[13] तादिति व्याक्षिप्य वाक्यं कवेस्[14]तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥ ५२ ॥ स्वस्ति स्वागतमर्थ्यहं वद विभो किं दीयतां मेदिनी का मात्रा मम विक्रमत्रयपदं दत्तं जलं दीयताम् । मा देहीत्युशनाब्रवीद्धरिरयं पात्रं किमस्मात्परं चेत्येवं बलिनार्चितो मखमुखे पायात्स वो वामनः ॥ ५३ ॥ ब्रह्माण्डच्छत्रदण्डः शतधृति[15]भवनाम्भोरुहो नालदण्डः क्षोणीनौकूपदण्डः[16] क्षरदमरसरित्पट्टिकाकेतुदण्डः । ज्योतिश्चक्राक्षदण्ड[17]स्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः श्रेयस्त्रैविक्रमस्ते[18] वितरतु विबुधद्वेषिणां कालदण्डः ॥ ५४ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिला[19]केतुदण्डायमानादाश्च्योतन्त्या[20]बभासे सुरसरिदमला वैजयन्तीव[21] कान्ता । भूमिष्ठो यस्तथान्यो भुवनगृहमहास्तम्भशोभां दधानः पातामेतौ पयोजोदरललिततलौ[22] पङ्कजा-

---

१ हिरण्यकशिपोस्तदनुचरस्य चोक्तिप्रत्युक्तयः २ कि भयमित्यर्थः. ३ उच्चैःस्थायिनी. ४ उत्पद्यमानः. ५ सिंहः. ६ अग्निः. ७ व्याप्तम्. ८ बन्धने. ९ आसनम्. १० ब्रह्मणः सामवेदध्वनिः. ११ यतो हरेर्भगवतो हृदये कौस्तुभमणिर्लोहितच्छविरस्त्यतस्तत्प्रभाभिः कर्बुरितत्व वक्षःस्थलस्यापीति भावः. १२ यतो हरेर्नाभौ कमलं वर्ततेऽतस्तत्र तत्सुरभिगन्धलोलुपतया भ्रमरागमनं घटत एवेति भावः. १३ लहरी. १४ शुक्रस्य. १५ ब्रह्मा. १६ गुणवृक्षः. १७ नाभिक्षेप्यदारुदण्डः. १८ त्रिषु लोकेषु पादन्यासो यस्य तस्य. १९ मरकतमणिनिर्मितध्वजदण्डायमानात्. २० क्षरन्ती. २१ पताका. २२ आरक्ततलाविति भावः.

क्षस्य पादौ ॥ ५५ ॥ कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याखिला ब्रह्मसृष्टिः कस्ते नाथो ह्यनाथः क्व च तव जनको नैव तातं स्मरामि । किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्त्रैलोक्यं भावगर्भं बलिमिदमवदद्वामनो वः स पायात् ॥ ५६ ॥

**परशुरामः** ॥ कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सीमदृषत्त्वमापुः । बभूवुरुत्सर्गजलं समुद्राः स रैणुकेयः श्रियमातनोतु ॥ ५७ ॥ किं दोर्भ्यां किमु कार्मुकोपनिषदा भर्गप्रसादेन किं किं वेदाधिगमेन भास्वति भृगोर्वंशे च किं जन्मना । किं वानेन ममाद्भुतेन तपसा पीडां कृतान्तोऽपि चेद्विप्राणां कुरुते किमप्यनुशयो रामस्य पुष्णातु वः ॥ ५८ ॥ नाशिष्यः किमभूद्भवः किमभवन्नापुत्रिणी रेणुका नाभूद्विश्वमकार्मुकं किमिति वः प्रीणातु रामत्रपा । विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतेनाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः ॥ ५९ ॥ पायाद्वो जमदग्निवंशतिलको वीरव्रतालंकृतो रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः । येनाशेषहताहिताङ्गरुधिरैः संतर्पिताः पूर्वजा भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता ॥ ६० ॥ द्वारे कल्पतरुर्गृहे सुरगवी चिन्तामणीनङ्गदे पीयूषं सरसीषु विप्रवदने विद्याश्चतस्रो दश । एवं कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ६१ ॥ नो संध्यां समुपासते यदि तदा लोकापवादाद्भयं सा चेत्स्वीक्रियते भविष्यति तदा राजन्यबीजे नतिः । इत्थं चिन्तयतश्चिरं भृगुपतेर्निश्वासकोष्णीकृतो नेत्रान्तःप्रतिबिम्बशोणसलिलः संध्याञ्जलिः पातु वः ॥ ६२ ॥

**रामचन्द्रः** ॥ वन्दामहे महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥ ६३ ॥ नमो रामपदाम्भोजं रेणवो यत्र संततम् । कुर्वन्ति कुमुदप्रीतिमरण्यगृहमेधिनः ॥ ६४ ॥ स्वर्णैणाजिनशयनो योजितनयनो दशास्यदिग्भागे । मुहुरवलोकितचापः कोऽपि दुरापः स नीलिमा शरणम् ॥ ६५ ॥ अधिपञ्चवटीकुटीरवर्तिस्फुटितेन्दीवरसुन्दरोरुमूर्तिः । अपि लक्ष्मणलोचनैकसख्यं भजत ब्रह्मसरोरुहायताक्षम् ॥ ६६ ॥ कनकनिकषभासा सीतयालिङ्गिताङ्गो नवकुवलयदामश्यामवर्णाभिरामः । अभिनव इव विद्युन्मण्डितो मेघखण्डः शमयतु मम तापं सर्वतो रामचन्द्रः ॥ ६७ ॥ परिणयविधौ

---

१ यदा ब्राह्मणेभ्यो भूर्दत्ता तदा तेषां स्वस्वभूमिसीमार्थं कुलपर्वता एवासन्निति भावः. २ यदा याचकेभ्यो दानं दीयते तदा दानात्प्रागदाद्भिरुत्सर्गजलं दीयते. अतस्तेनैतावद्दानं दत्तं येन समुद्रा उत्सर्गजलतयाभूवन्निति भावः. ३ धनुर्वेदविद्याज्ञानरहस्येन. ४ यतो महतामनुग्रहस्तदा सफलः स्याद्यद्युपकारः कस्यचित्कर्तुं शक्येत. परं मया तत्पीडापि निवारिता न भवत्यतः शंभुप्रसादेन किमित्यर्थः. ५ यतस्तपसासाध्यमपि साध्यते. परं यदि मया तत्कृत्यं नासाधि तदानेन तपसा किमिति भावः. ६ शत्रवः. ७ ब्राह्मणेभ्यो देयत्वेन विहितेत्यर्थः. 'ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः ॥' इत्युक्तत्वात्. ८ सूर्ये.

भङ्क्त्वानङ्गद्विषो धनुरग्रतो जनकसुतया दत्तां कण्ठे स्रजं हृदि धारयन् । कुसुमधनुषा पाशेनेव प्रसह्य वशीकृतोऽवनतवदनो रामः पायात्त्रपाविनयान्वितः ॥ ६८ ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामामनःकामाय प्रथमाननिर्मलगुणग्रामाय[1] रामात्मने । योगारूढमुनीन्द्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ६९ ॥ यो रामो न जघान वक्षसि रणे तं रावणं सायकैर्हृद्यस्य प्रतिवासरं वसति सा[2] तस्या ह्यहं राघवः । मय्यास्ते भुवनावली परिवृता द्वीपैः समं सप्तभिः स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचिन्तापरः ॥ ७० ॥ राज्यं येन पटान्तलग्नतृणवत्त्यक्तं गुरोराज्ञया पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः । स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां पायाद्वः स बिभीषणाग्रजनिहा[3] रामाभिधानो हरिः ॥ ७१ ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं शार्ङ्गाखण्डलचापमम्बुजभवाग्नीन्द्रादिबर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं श्रीरामाम्बुदमाश्रयेऽखिलजगत्संसारतापापहम् ॥ ७२ ॥ कूर्मो मूलवदालवालवदपांराशिर्लतावद्दिशो मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः । स्वामिन्व्योमतरुः क्रमे मम कियान्छ्रुत्वेति गां[4] मारुतेः सीतान्वेषणमादिशन्दिशतु वो रामः सलज्जः श्रियम् ॥७३॥ एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ वैदेहीकुचकुम्भकुङ्कुमरजःसान्द्रारुणाङ्काङ्कितौ । लोकत्राणविधानसाधुसवनप्रारम्भयूपौ भुजौ देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ॥ ७४ ॥ कल्याणानां निधानं कलिमलमथनं पावनं पावनानां पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य । विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ ७५ ॥ कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा । सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गधामा दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥ ७६ ॥ योऽद्धा[5] योद्धावधीत्तान्सपदि पलभुजः[6] संपराये[7] परा[8] ये येनायेन[9] नाश्रितानां स्तुतिरवनमितेशानचापेन चापे[10] । लङ्कालंकारहर्ता ककुभि ककुभि यः कान्तया सीतयासीद्दूनो[11] दूनो[12]ऽथ हृष्टः स विभुरवतु वः स्वः[13]सभार्यः सभार्यः ॥ ७७ ॥ ऋक्षाणां[14] भूरिधाम्नां श्रितमधिपतिना प्रस्फुरद्भीमतारं[15] स्फारं नेत्रानलेन[16] प्रसभनियमितोच्चापमीनध्वजेन[17] । रामायत्तं[18]

---

१ समूहः. २ सीता. ३ बिभीषणस्याग्रजन्मा रावणस्तं हन्तीति सः. ४ वाचम्. ५ निश्चितम्. ६ राक्षसान्. ७ युद्धे. ८ शत्रवः ९ भाग्येन. १० प्राप्ता.. ११ विरहित. १२ दुःस्थितमनाः. १३ देवसभास्वामी. १४ ऋक्षाणां भल्लूकानामधिपतिना जाम्बुवता; (पक्षे) नक्षत्राणामधिपतिना चन्द्रेण. १५ भीमास्तारो वानरविशेषः; (पक्षे) भीमा तारा नेत्रकनीनिका. १६ नेत्रा नायकेन नलेन नलनाम्ना वानरेण; (पक्षे) नेत्रानलेन तृतीयनेत्राग्निना. १७ उच्चा आपो यस्मिन्स उच्चापो मीनध्वजः समुद्रः; (पक्षे) उद्गतचापो मीनध्वजः कामः. १८ रामायत्तं रामचन्द्राधीनम्; (पक्षे) रामायाः पार्वत्या अधीनम्.

पुरारेः [1]कुमुदशुचि लसन्[2]नीलसुग्रीवमङ्गं ह्यावङ्गं वापि सैन्यं [3]दशवदनशिरश्छेदहेतु श्रियेऽस्तु ॥ ७८ ॥ यस्तीर्थानाम्[4]उपास्त्या गलितमलभरं मन्यते स्म स्वमेवं नाज्ञासीज्ज्ञिरे यन्मम चरणरजःपादपूतान्यमूनि । पादस्पर्शेन कुर्वञ्झटिति विघटितग्रावभावामहल्यां कौसल्यासूनुरूनं व्यपनयतु स वः श्रेयसा च श्रिया च ॥ ७९ ॥

**(सीता)** ॥ उन्मृष्टं कुचसीम्नि पत्रमकरं दृष्ट्वा हठालिङ्गनात्कोपो मास्तु पुनर्लिखाम्य[5]मुमिति स्मेरे रघूणां वरे । कोपेनारुणितोऽश्रुपातदलितः प्रेम्णा च विस्तारितो दत्तो मैथिलकन्यया दिशतु नः क्षेमं कटाक्षाङ्कुरः ॥ ८० ॥

**(हनूमान्)** ॥ अशेषलङ्कापतिसैन्यहन्ता श्रीरामसेवाचरणैककर्ता । अनेकदुःखाहतलोकगोप्ता त्वसौ हनूमांस्तव सौख्यकर्ता ॥ ८१ ॥ कृतक्रोधे यस्मिन्नमरनगरी मङ्गलरवा [6]नैवातङ्का लङ्का समजनि वनं वृश्चति सति । सदा सीताकान्तप्रणतिमतिविख्यातमहिमा हनूमानव्याद्वः कपिकुलशिरोमण्डनमणिः ॥ ८२ ॥

**(रामकृष्णौ)** ॥ त्रातः [7]काकोदरो येन द्रोग्धापि करुणात्मना । [8]पूतनामारणख्यातः स मेऽस्तु शरणं प्रभुः ॥ ८३ ॥ मर्दितरावणकंसौ सरयूयमुनाविहारिणौ देवौ । अर्पितविप्रकुमारौ हरिपति[9]र्हरिकेतनप्रियौ वन्दे ॥ ८४ ॥ यः [10]पूतनामारणलब्धकीर्तिः [11]काकोदरो येन विनीतदर्पः । [12]यशोदयालंकृतमूर्तिरव्यात्पतिर्यदूनामथवा रघूणाम् ॥ ८५ ॥

**कृष्णः** ॥ इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् । वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ ८६ ॥ देवः पायादपायान्नः स्मेरेन्दीवरलोचनः । संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥ ८७ ॥ पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः । त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥ ८८ ॥ दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः । आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ ८९ ॥ हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम् । राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ ९० ॥ देहि मत्कन्दुकं राधे परिधाननिगूहितम् । इति विस्रंसयन्नीवीं तस्याः कृष्णो मुदेऽस्तु नः ॥ ९१ ॥ मीमांसार्णवसोमं लसदर्कं तर्कपद्मस्य । वेदान्तविपिनसिंहं वन्दे गोविन्दसाभिधं ब्रह्म ॥ ९२ ॥ अवलोकितमनुमोदितमालिङ्गितमङ्गनाभिरनुरागैः । अधिवृन्दावनकुञ्जं मरकतपुञ्जं नमस्यामः ॥ ९३ ॥ मकरीविर-

---

१ कुमुदनाम्ना वानरेण शुचि; (पक्षे) कुमुदपुष्पवच्छुचि शुभ्रम्. २ नीलः सुग्रीवश्च वानरौ; (पक्षे) नीला नीलवर्णा शोभना ग्रीवा. ३ दशवदनशिरश्छेदहेत्विति सैन्यपक्षे स्फुटम्; अन्यत्र शिवप्रसादनार्थं रावणेनात्मनः शिरांसि च्छिन्नानीति प्रसिद्धिः. ४ सेवनया. ५ पत्रमकरम्. ६ नवभया. ७ अदरो भयशून्यः काक ; (पक्षे) कालियसर्पः. ८ पूतनामा पवित्रनामा रणे ख्यातश्च; (पक्षे) पूतनाया राक्षस्या मारणेन ख्यातः. ९ अर्जुनः. १० पूतनाया मारणेन लब्धा कीर्तिर्येन; (पक्षे) पवित्रनामा रणे लब्धा कीर्तिश्च येन. ११ कालियः सर्पः; (पक्षे) धृष्टः काकः. १२ यशोदया मात्रालंकृतो देहो यस्य; (पक्षे) यशसा दयया चालंकृतो देहो यस्य.

चनभङ्ग्या राधाकुचकलशपीडनव्यसनी । ऋजुमपि रेखां लुम्पन्वल्लववेषो हरिर्जयति ॥ ९४ ॥ कठिनतरदामवेष्टनलेखासंदेहदायिनो यस्य । राजन्ति वलिविभङ्गा स पातु दामोदरो भवतः ॥ ९५ ॥ खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः । भरभुग्नविनतबाहुषु गोपेषु हसन्हरिर्जयति ॥ ९६ ॥ नीतं नवनवनीतं कियदिति पृष्टो यशोदया कृष्णः । इयदिति गुरुजनसंसदि करधृतराधापयोधरः पातु ॥ ९७ ॥ राधामधुसूदनयोरनुदिनमुपचीयमानस्य । प्रणयतरोरिव कुसुमं मिथोऽवलोकस्मितं पायात् ॥ ९८ ॥ श्रुतिमपरे स्मृतिमपरे भारतमपरे भजन्तु भवभीताः । अहमिह नन्दं वन्दे यस्यालिन्दे परं ब्रह्म ॥ ९९ ॥ तप्तं कैर्न तपोभिः फलितं तद्गोपबालानाम् । लोचनयुगले यासामञ्जनमासीन्निरञ्जनं ब्रह्म ॥ १०० ॥ स्तनंधयन्तं जननीमुखाब्जं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम् । स्पृशन्तमन्यं स्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम् ॥ १०१ ॥ भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः । यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥ १०२ ॥ विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीवरसं पिबन्ति किम् । इति स्वपादाम्बुजपानकौतुकी स गोपबालः श्रियमातनोतु वः ॥ १०३ ॥ विलिख्य सत्याकुचकुम्भसीम्नि पत्रावलिन्यासमिषेण राधाम् । लीलारविन्देन तया सरोषं पायाद्द्विटः कोऽप्यभिहन्यमानः ॥ १०४ ॥ कुञ्चिताधरपुटेन पूरयन्वंशिकां प्रचलदङ्गुलिपङ्क्तिः । मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥ १०५ ॥ अतसीकुसुमोपमेयकान्तिर्यमुनातीरकदम्बमूलवर्ती । नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलं वः ॥ १०६ ॥ गायन्तीनां गोपसीमन्तिनीनां स्फीताकाङ्क्षामक्षिरोलम्बमालाम् । निश्चाञ्चल्यामात्मवक्त्रारविन्दे कुर्वन्नव्याद्देवकीनन्दनो वः ॥ १०७ ॥ पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे संनिधत्ताम् ॥ १०८ ॥ आनन्दमादधतमायतलोचनानामानीलमावलितकन्धरमात्तवंशम् । आपादमामुकुटमाकलितामृतौघमाकारमाकलयताममुमान्तरं नः ॥ १०९ ॥ त्वां पातु नीलनलिनीदलदामकान्तेः कृष्णस्य पाणिसरसीरुहकोशबन्धः । राधाकपोलमकरीलिखनेषु योऽयं कर्णावतंसकमलं विपुलीचकार ॥ ११० ॥ अभिनवनवनीतप्रीतमाताम्रनेत्रं विकचनलिनलक्ष्मीस्पर्धि सानन्दवक्त्रम् । हृदयभवनमध्ये योगिभिर्ध्यानगम्यं नवगगनतमालश्यामलं कंचिदीडे ॥ १११ ॥ अभिनवनवनीतस्निग्धमापीतदुग्धं दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः । दिशतु भुवनकृच्छ्रच्छेदितापिच्छगुच्छच्छवि नवशिखिपिच्छालाञ्छितं वाञ्छितं वः ॥ ११२ ॥ कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम् । असितसिचय[2]प्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासप्रियाहसितो हरिः ॥ ११३ ॥ ललितगमना[3] नार्यो[4]

---

१ धारयामः. २ दुकूलम्. ३ गोपीपक्षे ललितं गमनं यासां ताः; कृष्णपक्षे ललिते गे गाने मनो यस्य सः. ४ स्त्रियः; (पक्षे) नास्त्यार्यः श्रेष्ठो यस्मात्सः.

[1]राजन्मनोजनितान्तभाः [2]सुरतिसदृशस्ताः [3]सन्मुख्यो भवानपि तद्भुवे । वनभुवमितो गेहादेको न गच्छतु मां विनेत्यसकृदुदितः पुत्रः पित्रा जयत्यनघो हरिः ॥ ११४ ॥ देवः पायात्पयसि [4]विमले यामुने [5]मज्जतीनां याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि । लज्जालोलैरलसवलितैरुन्मिषत्पञ्चबाणैर्गोपस्त्रीणां नयनकुसुमैरञ्चितः केशवो नः ॥ ११५ ॥ वृन्दारण्ये तपनतनयातीरवानीरकुञ्जे गुञ्जन्मञ्जुभ्रमरपटलीकाकलीकेलिभाजि । आभीराणां मधुरमुरलीनादसंमोहितानां मध्ये क्रीडन्नवतु नियतं नन्दगोपालबालः ॥ ११६ ॥ शिरश्छायां कृष्णः क्षणमकृत राधाचरणयोर्भुजावल्लिच्छायामियमपि तदीयप्रतिकृतौ । इति क्रीडाकोपे निभृतमुभयोरप्यनुनयप्रसादौ जीयास्तामपि गुरुसमक्षं स्थितवतोः ॥ ११७ ॥ [6]वेमव्यापाराकलनम[7]तुरीस्पर्शमचिरादनुन्मीलत्तन्तुप्रकरघटनायासमसकृत् । विषीदत्पाञ्चालीविपदपनयैकप्रणयिनः पटानां निर्माणं [8]पतगपतिकेतोरवतु नः ॥ ११८ ॥ कपोले पत्रालीं पुलकिनि विधातुं व्यवसितः स्वयं श्रीराधायाः करकलितवर्तिर्मधुरिपुः । अभूद्वक्त्रेन्दौ यन्निहितनयनः कम्पितभुजस्तदेतत्सामर्थ्यं तदभिनवरूपस्य जयति ॥ ११९ ॥ जयश्रीवि[9]न्यस्तैर्म[10]हित इव मन्दारकुसुमैः स्वयं सिन्दूरेण द्विपरणमुदा [11]मुद्रित इव । भुजापीडक्रीडाहतकुवलयापीडकरिणः प्रकीर्णा[12]सृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ १२० ॥ सुपर्णः स्वर्णाद्रौ रचितमणिशृङ्गे जलधिजामुखाम्भोजे भृङ्गो निगमविलसत्पञ्जरशुकः । त्रिलोकीकस्तूरीतिलककमनीयो व्रजवधूविहारी श्रीकृष्णो दिशतु भवतां शर्म सततम् ॥ १२१ ॥ क यासि खलु चौरिके प्रमुषितं स्फुटं दृश्यते द्वितीयमिह मामकं वहसि कन्दुकं कञ्चुके । त्यजेति नवगोपिकाकुचयुगं प्रमथ्नन्बलाल्लसत्पुलकपञ्जरो जयति गोकुले केशवः ॥ १२२ ॥ मेघैर्मे[13]दुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं[14] भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय । इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले [15]रहःकेलयः ॥ १२३ ॥ कौन्ते[16]यस्य सहायतां करुणया गत्वा विनीतात्मनो येनोल्लङ्घितसत्पथः कुरुपति[17]श्चक्रे कृतान्तातिथिः । त्रैलोक्यस्थितिसूत्रधारतिलको देवः सदा संपदे साधूनामसुराधिनाथमथनः स्ताद्देवकीनन्दनः ॥ १२४ ॥ आताम्रे नयने स्फुरन्कुचभरः श्वासो न विश्राम्यति स्वेदाम्भःकणदन्तुरं तव मुखं हेतुस्तु नो लक्ष्यते । धिक्को वेद मनः स्त्रिया

---

१ राजता मनोजेन मदनेन नितान्तात्यन्ता भाः कान्तिर्यासां ताः; (पक्षे) राजन्मनोजनिः शोभमानमदनस्तान्तो म्लानो यस्यास्तादृशी भा यस्य सः. २ शोभायमानया रत्या कामपत्न्या सदृशाः; (पक्षे) सुष्टु रतौ रमणे योग्यः. ३ सन्ति शोभनानि मुखान्याननानि यासा ता., (पक्षे) सत्सु प्रशस्तेषु केलिचतुरेषु मुख्यः. ४ स्वच्छे. ५ स्नान कुर्वतीनाम्. ६ वेमा वस्त्रव्यूतिदण्डस्तद्व्यापाररहितम्. ७ तुरी च तन्तुवायानां यन्त्रविशेषः, तत्स्पर्श विना. ८ पतगाः पक्षिणस्तेषां पतिर्गरुडः स केतुर्यस्य तस्य. कृष्णस्येत्यर्थ. ९ विक्षिप्तैः. १० पूजितः. ११ चित्रितः. १२ रक्तबिन्दुः. १३ व्याप्तमित्यर्थः. १४ रात्रौ. १५ एकान्तक्रीडाः. १६ युधिष्ठिरस्य. १७ मारितः.

इति गिरा रुष्टां प्रियां भीषयंस्तस्यास्तत्क्षणकातरेक्षणपरिस्पृष्टो हरिः पातु वः ॥ १२५ ॥ संसक्तानिव पातुमौपनिषदव्याहारमाध्वीरसानुन्मार्ष्टुं व्रजसुन्दरीकुचतटीपाटीररेणूनिव । उन्मीलन्मुरलीनिनादबहुलामोदोपसीदद्रवीजिह्वालीढमलीकबल्लवशिशोः पादाम्बुजं पातु वः ॥ १२६ ॥ कृष्णो गोरसचौर्यमम्ब कुरुते किं कृष्ण मातः सुरापानं न प्रकरोमि राम किमिदं नाहं परस्त्रीरतः । किं गोविन्द वदत्यसौ हलधरो मिथ्येति तां व्याहरन्गोपीगोपकदम्बकं विहसयन्मुग्धो मुकुन्दोऽवतु ॥ १२७ ॥ मातस्तर्णकरक्षणाय यमुनाकच्छं न गच्छाम्यहं कस्माद्वत्स पिनष्टि पीवरकुचद्वन्द्वेन गोपीजनः । भ्रूसंज्ञाविनिवारितोऽपि बहुशो जल्पन्यशोदाग्रतो गोपीपाणिसरोजमुद्रितमुखो गोपीपतिः पातु वः ॥ १२८ ॥ कासि त्वं वद चौर्यकारिणि कुतः कस्त्वं पुरो[2] यामिकः किं ब्रूषे मुषितौ सुवर्णकलशौ भूपस्य केन त्वया । कुत्र स्तः प्रकटौ तवाञ्चलतटे कुत्रेति तत्पश्यतामित्युक्ते धृतबल्लवीकुचयुगस्त्वां पातु पीताम्बरः ॥ १२९ ॥ कृष्ण त्वं पठ किं पठामि ननु रे शास्त्रं किमु ज्ञायते तत्त्वं कस्य विभोः स कस्त्रिभुवनाधीशश्च तेनापि किम् । ज्ञानं भक्तिरथो विरक्तिरनया किं मुक्तिरेवास्तु ते दध्यादीनि भजामि मातुरुदितं वाक्यं हरेः पातु वः ॥ १३० ॥ कृष्ण त्वं नवयौवनोऽसि चपलाः प्रायेण गोपाङ्गनाः कंसो भूपतिरब्जनालमृदुलग्रीवा वयं गोदुहः । तद्याचेऽञ्जलिना भवन्तमधुना वृन्दावनं मद्विना मा यासीरिति नन्दगोपवचसा नम्रो हरिः पातु वः ॥ १३१ ॥ कस्त्वं कृष्णमवेहि मां किमिह ते मन्मन्दिराशङ्कया युक्तं तन्नवनीतभाजनपुटे न्यस्तः किमर्थं करः । कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता बाला वत्सगतिं विवेक्तुमिति संजल्पन्हरिः पातु वः ॥ १३२ ॥ स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी क्षोणीमावृणुते तमालमलिनच्छाया तमःसंहतिः । तन्मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति गोप्या गिरः श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ १३३ ॥ मातः किं यदुनाथ देहि चषकं[3] किं तेन पातुं पयस्तन्नास्त्यद्य कदास्ति तन्निशि निशा का वान्धकारोदये । आमील्याक्षियुगं निशाप्युपगता देहीति मातुः पुनर्वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥ १३४ ॥ अर्धोन्मीलितलोचनस्य पिबतः पर्याप्तमेकं स्तनं सद्यःप्रस्नुतदुग्धदिग्धमपरं हस्तेन संमार्जतः । मात्रा चाङ्गुलिलालितस्य चुबुके स्मेरायमाणे मुखे विष्णोः क्षीरकणाम्बुधामधवला दन्तद्युतिः पातु वः ॥ १३५ ॥ गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते किं त्वेवं विजनस्थयोर्हतजनः[4] संभावयत्यन्यथा । इत्यामन्त्रणभङ्गिसूचितवृथाप्रस्थानखेदालसामाश्लिष्यन्पुलकोत्कराञ्चितवपुर्गोपीं हरिः पातु वः ॥ १३६ ॥ रामो[6] नाम बभूव हुं तदबला सीतेति हुं तौ पितुर्वाचा पञ्चवटीवने निवसतस्ता-

१ वृषबालः. २ नगररक्षकः. ३ पानपात्रम्. ४ एकान्तगतयोः. ५ रचना. ६ यथा माता स्वपुत्रप्रस्वापनाय प्राचीनाः कथाः कथयति तथा यशोदापि राम इति कश्चिद्राजासीदिति वदति स्म. तच्छ्रुत्वा कृष्णोऽपि हुंकारं दत्तवान्.

माहरद्रावणः । कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां सौमित्रे क्व धनुर्धनुर्धनु-
रिति प्रोक्ता गिरः पान्तु वः ॥ १३७ ॥ कोऽयं द्वारि हरिः[1] प्रयाह्युपवनं शाखामृगस्यात्र
किं कृष्णो[2]ऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात् । राधेऽहं मधुसूदनो[3] व्रज लतां
तामेव पुष्पान्वितामित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥ १३८ ॥ पीठे
पीठनिषण्णबालकगले तिष्ठन्सगोपालको यन्त्रान्तः[4]स्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टा-
रवम् । वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन्यः पयः पायादागतगोपिकानयनयोर्ग-
ण्डूषफूत्कारकृत् ॥ १३९ ॥ पद्मे[5] त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले नीले मुह्यति
किं करोमि महितैः[6] क्रीतोऽस्मि ते विभ्रमैः । इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो
राधया कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥ १४० ॥ दृष्ट्या केशव गो-
पैरागहृतया[7] किंचिन्न दृष्टं मया तेनात्र स्खलितास्मि नाथ पतितां[9] किं नाम नालम्बसे ।
एकस्त्वं विषमेषु[10]खिन्नमनसां सर्वाबलानां[11] गतिर्गोप्यैवं गदितः सलेशम[12]वताद्गोष्ठे[13] हरिर्वश्चि-
रम् ॥ १४१ ॥ केयं भाग्यवती तवोरसि मणी ब्रूषेऽग्र[14]वर्णं विना कृत्वास्याः प्रथमं विना
क्व सहजो वर्णो मणेस्तादृशः । स्त्रीरूपं कथमस्य लिङ्गनियमात्पृच्छामि वध्वाकृतिं मुग्धे
त्वत्प्रतिबिम्बमित्यपलपन्राधां हरिः पातु वः ॥ १४२ ॥ यां दृष्ट्वा यमुनापिपासुरनिशं
व्यूहो गवां गाहते विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते । उत्तंसाय तमालप-
ल्लवमिति च्छिन्दन्ति यां गोपिकाः कान्तिः कालियशासनस्य वपुषः सा पावनी पातु वः
॥ १४३ ॥ श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तनव्यामर्दाद्गलितेऽपि चन्दनरजस्यङ्गे
वहन्सौरभम् । कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं बिभ्रत्कामपि वेणुनादरसिको
जाराग्रणीः पातु वः ॥ १४४ ॥ कण्ठालिङ्गनमङ्गलं घनकुचाभोगोपभोगोत्सवं श्रो-
णीसंगमसौभगं च सततं मत्प्रेयसीनां पुरः । प्राप्तुं कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः
स्वयं गोपीनामहरद्दुकूलनिचयं कृष्णः स पुष्णातु नः ॥ १४५ ॥ कृष्णेनाम्ब गतेन रन्तु-
मधुना मृद्भक्षिता स्वेच्छया सत्यं कृष्ण किमेवमाह मुसली[15] मिथ्याम्ब पश्याननम् । व्यादे[16]-
हीति विकासिते च वदने दृष्ट्वा समस्तं जगन्माता यस्य जगाम विस्मयपदं पायात्स वः श्री-
पतिः ॥ १४६ ॥ अम्ब श्राम्यसि तिष्ठ गोरसमहं मथ्नामि मन्थानकं प्रालम्ब्य स्थितमी-

---

१ वानरः; (पक्षे) कृष्णः २ कृष्णवर्णः; (पक्षे) कृष्णनामा. ३ भ्रमरः; (पक्षे) मधुसूदननामा. ४ आलम्बमानो रज्जुपञ्जरः. शिक्य इति प्रसिद्धः. ५ हे रमे; (पक्षे) पद्मरूपे. ६ पूज्यैः. ७ गोपे त्वयि यो राग आसक्तिस्तद्भृतयापहृतया; (पक्षे) गवां परागैर्धूलिभिर्व्याप्तया. ८ युक्तायुक्तम्; (पक्षे) समविषमम्. ९ पतित्वम्; (पक्षे) पतनं प्राप्ताम्. १० विषमेषुः पञ्चशरस्तेन खिन्नमनसाम्; (पक्षे) विषमेषु सकटेषु खिन्नमनसाम्. ११ स्त्रीणाम्; (पक्षे) बलरहितानाम्. १२ ससूचनम्. १३ गोस्थानम्. १४ रमणीत्यर्थः. १५ बलभद्रः. १६ विकासय.

श्वरं सरभसं दीनाननो [1]वासुकिः । सासूयं [2]कमलालया [3]सुरगणः सानन्दमुद्यद्भयं [4]राहुः प्रै-
क्षत यं स वोऽस्तु शिवदो गोपालबालो हरिः ॥ १४७ ॥ कालिन्द्याः पुलिनेषु केलिकु-
पितामुत्सृज्य रासे [5]रसं गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् । तत्पादप्र-
तिमानिवेशितपदस्योद्भूतरोमोद्गते[6]रक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ १४८ ॥
कंसं ध्वंसयते मुरं तिरयते हंसं तथा हिंसते बाणं क्षीणयते बकं लघयते पौण्ड्रं तथा लुम्पते ।
भौमं क्षामयते बलाद्बलभिदो दर्पं पराकुर्वते क्लिष्टं शिष्टगणं प्रणम्रमवते कृष्णाय तुभ्यं नमः
॥ १४९ ॥ रासोल्लासभरेण विभ्रमभृता[7]माभीरवामभ्रुवा[8]मभ्यर्णे परिरभ्य निर्भरमुरः प्रेमान्धया
राधया । साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुतिव्याजा[9]दुद्भटचुम्बितः स्मितमनोहारी
हरिः पातु वः ॥ १५० ॥ साकूतस्मितमाकुलाकुलगलद्धम्मिल्ल[10]मुल्लासितभ्रूवल्लीक[11]मलीकदर्शि-
तभुजामूलार्धदृष्टस्तनम् । गोपीनां [12]निभृतं निरीक्ष्य ललितं कांचिच्चिरं चिन्तयन्नन्तर्मुग्धमनोह-
रो हरतु वः क्लेशं [13]नवः केशवः ॥ १५१ ॥ तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीत-
स्थानकृतावधानललनालक्षैर्न संलक्षिताः । [14]संमुग्धं मधुसूदनस्य मधुरे राधामुखेन्दौ [15]मृदुस्पन्दं
पल्लविताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः ॥ १५२ ॥ वृष्टिव्याकुलगोकुला[16]वन[17]रसादुद्धृत्य
गोवर्धनं बिभ्रद्वल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः । कंदर्पेण तदर्पिताधरतटीसिन्दूरमुद्रा-
ङ्कितो बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ १५३ ॥ राधामुग्धमुखारविन्द[18]मधुप-
स्त्रैलोक्यमौलिस्थली[19]नेपथ्योचितनीलरत्नमवनीभारावतारक्षमः । स्वच्छन्दव्रजसुन्दरीजनमन-
स्तोष[20]प्रदोषश्चिरं कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ १५४ ॥ किं विश्राम्यसि
[21]कृष्णभोगिभवने [22]भाण्डीरभूमीरुहि भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् । रा-
धाया वचनं तदध्वगमुखान्नन्दान्तिके [23]गोपायतो गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा
गिरः ॥ १५५ ॥ सान्द्रानन्दपुरंदरादिदिविषद्वृन्दैरमन्दादरादानम्रैर्मुकुटेन्द्रनीलमणिभिः [24]सं-
दर्शितेन्दीवरम् । स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं श्रीगोविन्दपदारविन्दम-
शुभ[25]स्कन्दाय वन्दामहे ॥ १५६ ॥ प्रातर्नीलनिचोल[26]मच्युतमुरःसंवीत[27]पीतांशुकं राधा-
याश्चकितं विलोक्य हसति स्वैरं सखीमण्डले । व्रीडाचञ्चल[28]मञ्चलं नयनयोराधाय राधानने
स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥ १५७ ॥ प्रीतिं वस्तनुतां हरिः कुवल-

---

१ समुद्रमथने रज्जूकृतस्य मम पुनरपि स एव भयकरः प्रसङ्ग आगत इति त्रासेन. २ मम सपत्नी काचिदुद्भविष्यतीत्यसूयया. ३ अमृतप्राप्तिर्भविष्यतीति धिया. ४ शिरश्छेदो भविष्यतीति बुद्ध्या. ५ रागम्. ६ सफलः. ७ गोपिकानाम्. ८ समीपम्. ९ प्रकटम्. १० उच्चैःकृता. ११ जृम्भणादिच्छलेनेत्यर्थः. १२ गोप्यभावम्. १३ तरुणः. १४ अव्यक्तम्. १५ किंचिच्चलन यथा स्यात्तथा. १६ रक्षणम्. १७ अनुरागः. १८ नीलत्वादधरपानकर्तृत्वाच्च. १९ अलंकारः. २० रात्रिमुखे हि नार्यस्तुष्यन्तीति भावः. २१ कृष्णश्चासौ भोगी सर्पश्च तस्य भवने; (पक्षे) कृष्णस्य भोगिनः शृङ्गारिणो विलासगृहे. २२ भाण्डीरनाम्नि वटवृक्षे. २३ संगोपनं कुर्वतः. २४ संदर्शित इन्दीवरभ्रमो यत्र. २५ नाशाय. २६ वस्त्रम्. २७ परिधानीकृत. २८ कटाक्षः.

यापीडेन सार्धं रणे राधापीनपयोधरस्मरणकृत्कुम्भेन संभेदवान् । पत्रे बिभ्यति मीलति क्षणमपि क्षिप्रं तदालोकनाद्व्यामोहेन जितं जितं जितमभूद्व्यालोलकोलाहलः ॥ १५८ ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः । इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वासोञ्चलं राधायाः स्तनकोरकोपरि लसन्नेत्रो हरिः पातु वः ॥ १५९ ॥ वामांसस्थलचुम्बिकुण्डलरुचा जातोत्तरीयच्छविं वंशीगीतिभवत्त्रिभङ्गवपुषं भ्रूलास्यलीलापरम् । किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालकं राधादिप्रमदाशतावृतमहं वन्दे किशोराकृतिम् ॥ १६० ॥ अन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसनः स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् । दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतु वोऽश्रेयांसि वंशीरवः ॥ १६१ ॥ मौलौ केकिशिखण्डिनी मधुरिमा धाराधरे वंशिनी पीनांसे वनमालिनी हृदि लसत्कारुण्यकल्लोलिनी । श्रोण्यां पीतदुकूलिनी चरणयोर्व्यत्यस्तविन्यासिनी लीला काचन मोहनी विजयते वृन्दावनावासिनी ॥ १६२ ॥ मालाबर्हमनोज्ञकुन्तलभरां वन्यप्रसूनोक्षितां शैलेयागुरुसक्तचित्रतिलकां शश्वन्मनोहारिणीम् । लीलावेणुरवामृतैकरसिकां लावण्यलक्ष्मीमयीं बालां बालतमालनीलवपुषं वन्दे परां देवताम् ॥ १६३ ॥ अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं किंचित्कुञ्चितकोमलाधरपुटं साचिप्रसारीक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं ध्याये जगन्मोहनम् ॥ १६४ ॥ अस्मिन्कुञ्जे विनापि प्रचलति पवनाद्वर्तते कोऽपि नूनं पश्यामः किं न गत्वेत्यनुसरति गणे भीतभीतेऽर्भकाणाम् । तस्मिन्राधासखो वः सुखयतु विलसल्लीलया कैटभारिर्व्यातन्वानो मृगारिप्रबलघुरघुरारावरौद्रान्निदानान् ॥ १६५ ॥ अङ्गुल्या कः कपाटं[1] प्रहरति कुटिले माधवः[2] किं वसन्तो नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः । नाहं घोराहिमर्दी किमुत खगपतिर्नो हरिः किं कपीन्द्र इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥ १६६ ॥ वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवःस्वः सृजन्ती नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि । विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया माया पायादपायादविहितमहिमा कापि पैताम्बरी वः ॥ १६७ ॥ नामोदस्ताखिलामो दमनियमयुजां यः प्रकामोदवाहश्यामो दर्पाढ्यधामोदयमिलितयशोधारया मोदते यः । वामोदन्यासदामोदरतरलदृशां दत्तकामोदयो यः सामोदः श्रीललामो दलयतु दुरितं सोऽत्र दामोदरो वः ॥ १६८ ॥

(बलभद्रः) ॥ निष्पात्याशु हिमांशुमण्डलमधः पीत्वा तदन्तःसुधां कृत्वैनं चषकं हसन्निति

---

१ वाहने. २ मृते सति. ३ चञ्चलः. ४ साधु साध्विति शिरःकम्पनम्. ५ गुम्फितम्. ६ अनिच्छोरित्यर्थः. ७ द्वारम्. ८ लक्ष्मीपतिः, (पक्षे) वसन्तः. ९ चक्रधारी; (पक्षे) कुलालः. १० विष्णुः; (पक्षे) शेषः. ११ कृष्णपक्षेऽहिः कालिय ; गरुडपक्षेऽहिः सर्पः. १२ गरुडः. १३ विष्णुः; (पक्षे) वानरः.

हलापानाय कौतूहलात् । भो देव द्विजराजि मादृशी सुरास्पर्शोऽपि न श्रेयसे मां मुञ्चेति तदर्थितो[1] हलधर: पायादपायाज्जगत् ॥ १६९ ॥ प्रेमोन्नामितरेवतीमुखगतामास्वाद्य काद्म्बरीमुन्मत्तं क्वचिदुत्पतत्क्वचिदपि भ्राम्यत्क्वचित्प्रस्खलत् । रक्तापाङ्गमधीरलाङ्गलमलिश्यामाम्बराडम्बरं क्लेशं न: कवलीकरोतु सकलं पाकाभिरामं मह: ॥ १७० ॥ उष्णालु क्वचिदर्कधामनि मनाङ्निद्रालु शीतानिले हालानां गृहयालु चुम्बदसकृल्लज्जालु जायामुखम् । नित्यं निष्पतयालु तिर्यगवनीशय्याशयालु क्षणं गीतेभ्य: स्पृहयालु धाम धवलं दीने दयालु श्रये ॥ १७१ ॥

(रुक्मिणी) ॥ श्लाघ्याशेषतनुं सुदर्शनकर: सर्वाङ्गलीलाजितत्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरि: । बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रात्म चक्षुर्दधत्स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥ १७२ ॥

(राधा) ॥ राधा पुनातु जगदच्युतदत्तचित्ता मन्थानमाकलयती दधिरिक्तपात्रे । यस्या: स्तनस्तबकचूचुकलोलदृष्टिर्देवोऽपि दोहनधिया वृषभं दुदोह ॥ १७३ ॥ सुधाधाम्न: कान्तिस्तव वदनपङ्केरुहगुणैर्जितेव म्लानत्वं व्रजति सहसा प्राणदयिते । वदत्येवं कान्ते दिवसविरहातङ्कचकिता तदङ्गे संलग्ना तव दिशतु राधा प्रियशतम् ॥ १७४ ॥

(नन्दक:) ॥ सान्द्रां मुदं यच्छतु नन्दको व: सोल्लासलक्ष्मीप्रतिबिम्बगर्भ: । कुर्वन्नजस्त्रं यमुनाप्रवाहसलीलराधास्मरणं मुरारे: ॥ १७५ ॥

(वेणु:) ॥ क्रेङ्कार: स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवो झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनि: । तन्व्या: कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कणक्वाण: प्रेम तनोतु वो नववयोलास्याय वेणुस्वन: ॥ १७६ ॥

बुद्ध: ॥ षट्[3]चक्रेक्रम[4]भावना[5]परिगतं हृत्पद्ममध्यस्थितं संपश्यञ्छिवरूपिणं लय[6]वशादात्मानमध्याश्रित: । युष्माकं मधुसूदनो बुधवपुर्धारी स भूयान्मुदे यस्तिष्ठेत्कमलासने कृत[7]रुचिर्बुद्धैकलिङ्गाकृति: ॥ १७७ ॥ रेतोरक्तमयान्यमूनि भविनां[12] विण्मूत्रपूर्णोदराण्यालोक्येव कलेवराणि विगलत्तोयार्द्ररन्ध्राणि य: । मायाजालनियन्त्रितानि[13] घृणया नोन्मीलयत्यक्षिणी निर्व्याज[14]प्रणिधाननिश्चलमतिर्बुद्ध्यै स बुद्धोऽस्तु व: ॥ १७८ ॥ ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षु: क्षणं पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि । मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्त: कुतोऽन्य: पुमाञ्छश्वन्मारवधूभिरित्यभिहितो बुद्धो जिन: पातु व: ॥ १७९ ॥ बद्ध्वा पद्मासनं यो नयनयुगमिदं न्यस्य नासाग्रदेशे धृत्वा

---

१ चन्द्रेण प्रार्थित:. २ शब्द:. ३ मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्धि-आज्ञाख्यानि षट् चक्राणि. ४ परिपाटी. ५ वासना. ६ व्यासम्. ७ चित्तैकाग्र्यवशात्. ८ स्थित:. ९ 'जङ्घाया मध्यभागे तु संश्लेषो यत्र जङ्घया । पद्मासनमिति प्रोक्तं तदासनविचक्षणै: ॥' १० ज्ञानी. ११ ज्ञानम्. १२ संसारिणाम्. १३ बद्धानि. १४ चेत:समाधिना.

मूर्तौ च शान्तौ समरसमिलितौ चन्द्रसूर्याख्यवातौ । पश्यन्नन्तर्विशुद्धं किमपि च परमं ज्योतिराकारहीनं सौख्याम्भोधौ निमग्नः स दिशतु भवतां ज्ञानबोधं बुधोऽयम् ॥ १८० ॥ कामेनाकृष्य चापं हतपटुपटहं वल्गुभिर्मारवीरैर्भ्रूभङ्गोत्क्षेपजृम्भास्मितललितदृशा दिव्यनारीजनेन । सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन ध्यायन्यो योगपीठादचलित इति वः पातु दृष्टो मुनीन्द्रः ॥ १८१ ॥

**कल्किः ॥** उद्यतकरकरवालः शकतिमिरध्वंसने महानिपुणः । कल्किहरिर्वः पायादपायतः कलिनिशान्तोत्थः ॥ १८२ ॥ यवनीनयनाम्बुधोरणीभिर्धरणीनामपनीय तापवह्निम् । सुकृतद्रुमसेकमाचरन्तं धृतकल्कं प्रणमामि निर्विकल्पम् ॥१८३॥ प्रेङ्खद्वाजितरंगमुन्मदगजग्राहप्रगल्भं भटव्यावल्गत्स्फुटपुण्डरीकनिलयं डिण्डीरपिण्डावलिम् । म्लेच्छानीकमहार्णवं सुविपुलं सङ्ग्रामकल्पावधौ यश्चौर्वाग्निरिवाभवद्दहयतु स वः कल्कानि कल्की हरिः ॥ १८४ ॥

## सूर्यः ।

खण्डितानेत्रकंजालिमञ्जुरञ्जनपण्डिताः । मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भानवः ॥ १ ॥ शुकतुण्डच्छविसवितुश्चण्डरुचः पुडरीकवनबन्धोः । मण्डलमुदितं वन्दे कुण्डलमाखण्डलाशायाः ॥ २ ॥ अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः । मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥ ३ ॥ प्राचीकुङ्कुमतिलकं पूर्वाचलरोहणैकमाणिक्यम् । त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥ ४ ॥ कटुभिरपि कठोरचक्रवाकोत्करविरहज्वरशान्तिशीतवीर्यैः । तिमिरहतमयं महोभिरञ्जयति जगन्नयनौघमुष्णभानुः ॥ ५ ॥ यद्बिम्बमम्बरमणिर्यदपां प्रसूतिर्नक्तं निषिञ्चति यदग्निशिखासु भासः । ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखाः पूषा पुराणपुरुषः स नमोऽस्तु तस्मै ॥ ६ ॥ यो रक्ततामतितरामतुलं दधानो दिक्प्रौढदारनृहमोहनवाप्तवासः । योषिद्द्वयीपतिविडम्बनभृत्स शश्वत्पायादपायसमुदायहरो रविर्नः ॥ ७ ॥ ब्रह्माण्डसंपुटकलेवरमध्यवर्ति चैतन्यपिण्डमिव मण्डलमस्ति यस्य । आलोकितोऽपि दुरितानि निहन्ति यस्तं मार्तण्डमादिपुरुषं प्रणमामि नित्यम् ॥ ८ ॥ सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणा भिल्लीपल्लवशङ्कया विचिनुते सान्द्रद्रुमद्रोणिषु । कान्ताकुङ्कुमकाङ्क्षया करतले मृद्नन्ति लग्नं च यत्तत्तेजः प्रथमोद्भवं भ्रमकरं सौरं चिरं पातु वः ॥ ९ ॥ एकस्मिन्नयने भृशं तपति यः काले स दाहक्रमो येनातन्यत यत्प्रकाशसमयेनैषां पदं दुर्लभम् । सा व्योमावयवस्य यन्न विदिता लोके गतिः शाश्वती श्रीसूर्यः सुरसेवितोऽपि हि महादेवः स नस्त्रायताम् ॥ १० ॥ जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं रक्तैः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य । आ-

१ शरीरे. २ फेनपिण्डः. ३ खण्डयतु. ४ पापानि. ५ नायिकाविशेषा. ६ कमलम्. ७ पूर्वदिशः. ८ इन्द्रः.

यान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ ११ ॥ भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये । कालाकारान्धकाराननपतितजगत्साध्वसध्वंसकल्याः कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥ १२ ॥ साटोपव्योमहट्टोषितरजनिवणिङ्नायकोन्मुक्ततारा मुक्ताहारापहारात्तरलखगरवप्रोत्थिताकीर्तिशान्त्यै । कर्षन्नम्भोजकुम्भोदरकुहरबहिर्निःसरत्षट्पदालीकालव्यालीं करेणाकलयतु दिनकृत्कल्मषोन्मूलनं वः ॥ १३ ॥ चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्तानक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः । रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥ १४ ॥ किं छत्रं किं नु रत्नं तिलकमुत तथा कुण्डलं कौस्तुभो वा चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिद्वेषिदेहे । ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ १५ ॥ शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः । घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ १६ ॥

(किरणाः) ॥ सिन्दूराणीव सीदत्कृपणकुलवधूमूर्ध्नि ये संचरन्तः प्रेक्ष्यन्ते दिक्षु शैलाः शिखरभुवि लसत्पद्मरागाङ्कुरा यैः । धुन्वन्ते ध्वान्तधाराः सह दुरितचयैर्दूरदृश्याः सुदृश्याः पान्तु त्वां पद्मबन्धोरकरणकिरणाः पूरणाः पद्मबन्धोः ॥ १७ ॥

(तुरगाः) ॥ अवतु नः सवितुस्तुरगावली समतिलङ्घिततुङ्गपयोधरा । स्फुरितमध्यगतारुणनायका मरकतैकलतेव नभश्रियः ॥ १८ ॥

---

## चन्द्रः ।

लालयन्तमरविन्दवनानि क्षालयन्तमभितो भुवनानि । पालयन्तमथ कोककुलानि ज्योतिषां पतिमहं महयामि ॥ १ ॥ रविमावसते सतां क्रियायै सुधया तर्पयते सुरान्पितॄंश्च । तमसां निशि मूर्छतां विहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ २ ॥ स्वर्भानुप्रतिवारपौरणमि-

---

१ क्रयविक्रयस्थानम्. २ विष्णुः. ३ कीलक. ४ इन्द्र. ५ अश्वान्. ६ यानमुख. ७ चक्र. ८ युगंधर. ९ वेगः. १० चूडारत्नम्. ११ यतो विष्णोर्नाभिदेशे कमलं वर्तते. १२ वामनाकृत्या. १३ कुष्ठरोगविशीर्णनासिकापादपाणीन्. १४ क्षतविशिष्टैः. १५ शरीरैः. १६ चिरकालं ग्रस्तान्. १७ सूर्यस्य. १८ सततकृपा. १९ रश्मयः. २० पापम्. २१ मेघाः; (पक्षे) स्तनौ. २२ अरुणरूपो नायकः सारथिर्यस्याः; (पक्षे) अरुण आरक्तो नायको हारमध्यमणिः. २३ सूर्यतुरंगमाणां हरितवर्णत्वादित्यर्थः. २४ गिलनम्.

लद्दन्तौघर्यन्त्रोद्भवश्वभ्रालीपतयालुदीधितिसुधासारस्तुषारद्युतिः । पुष्पेष्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ ३ ॥

## पृथिवी ।

स्वर्गौकोभिरदोनिवासिपुरुषारब्धातिशुद्धाध्वरस्वाहाकारवषट्क्रियोत्थममृतं स्वादीय आदीयते । आम्नायप्रवणैरलंकृतिजुषेऽमुष्यै मनुष्यैः शुभैर्दिव्यक्षेत्रसरित्पवित्रवपुषे देव्यै पृथिव्यै नमः ॥ १ ॥

इति श्रीसुभाषितरत्नभाण्डागारे प्रथमं प्रकरणं समाप्तम् ।

१ छिद्रकरणसाधनम्. २ दन्तदशनकृतविवरपरम्परा. ३ पतनशीला. ४ मदनः. ५ विवाहः. ६ देवैः

# प्रकरणम् २ ।

## सामान्यप्रकरणम् ।

### सुभाषितप्रशंसा ।

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती । तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम् ॥ १ ॥ सुभाषितेन गीतेन युवतीनां च लीलया । मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥ २ ॥ सुभाषितमयद्रव्यसंग्रहं न करोति यः । [1]प्रस्तावयज्ञे संप्राप्ते कां प्रदास्यति दक्षिणाम् ॥ ३ ॥ संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे । सुभाषितरसास्वादः संगतिः सुजने जने ॥ ४ ॥ सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः । विनापि कामिनीसङ्गं कवयः सुखमासते ॥ ५ ॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् । मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ ६ ॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् । इत्यादिगुणरत्नानां संग्रही [2]नावसीदति ॥ ७ ॥ संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम् । एकमापातमधुरमन्यदालोचनामृतम् ॥ ८ ॥ शिशुर्वेत्ति पशुर्वेत्ति वेत्ति नागरसं फणी । साहित्यरसमाधुर्यं शंकरो वेत्ति वा न वा ॥ ९ ॥ द्राक्षाम्लानमुखी जाता शर्करा [3]चाश्मतां गता । सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥ १० ॥ संसदि तदेव भूषणमुपकारकमवसरे धनं मुख्यम् । सूक्तं दधति [4]सुवर्णं कल्याणमनर्घ्यमिह धन्याः ॥ ११ ॥ कथमिह मनुष्यजन्मा संप्रविशति सदसि [5]विबुधगमितायाम् । येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः ॥ १२ ॥ [6]अकलितशब्दालंकृतिर[7]नुकूला [8]स्खलितपदनिवेशापि । अभिसारिकेव रमयति [9]सूक्तिः [10]सोत्कर्षशृङ्गारा ॥ १३ ॥ आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः । अकलितरसालमुकुलो न कोकिलः [11]कलमु[12]दञ्चयति ॥ १४ ॥ यस्य वक्त्र[13]कुहरे सुभाषितं नास्ति नाप्यवसरे प्रजल्पति । आगतः सदसि धीमतामसौ [14]लेप्यनिर्मित इवावभासते ॥ १५ ॥ सुभाषितं हारि विशत्यधोगलान्न [15]दुर्जनस्यार्करिपोरिवामृतम् । तदेव धत्ते हृदयेन सज्जनो हरिर्म[16]हारत्नमिवातिनि-

---

१ प्रसङ्गः. २ नश्यति. ३ पाषाणताम्. ४ काञ्चनम्; (पक्षे) सुष्ठु पदैर्युक्तम्. ५ पण्डितपूर्णायां देवयुक्तायां च. ६ न कलिता शब्दस्यालंकृतिर्यया. अनुप्रासादिशब्दालंकृतिशून्येत्यर्थः; (पक्षे) अकलितः शब्दो ययैतादृश्यलंकृतिर्भूषणं यस्याः. सशब्दभूषणवत्त्वेऽन्यस्य ज्ञानं भविष्यतीति धियेति भावः. ७ द्रुतं रसप्रत्यायिका; (पक्षे) नायकचित्तानुकूल्यवती. ८ कोमलं सुप्तिङ्पदानां ग्रथनं यत्र; (पक्षे) स्थानादन्यत्र पतनं यथा स्यात्तथा चरणविन्यासो यस्याः. ९ सुभाषितम्; (पक्षे) शोभनोक्तिमती. १० उत्कृष्टशालिशृङ्गाररसवती; (पक्षे) अहमस्यायं ममेति रतिपरिपोषवती. ११ मधुरम्. १२ वदति. १३ बिले. १४ पङ्करचितः. १५ राहोः. १६ कौस्तुभमणि.

मैलम् ॥ १६ ॥ नायं प्रयाति विकृतिं विरसो न यः स्यान्न क्षीयते बहुजनैर्नितरां निपीतः। जाड्यं निहन्ति रुचिमेति करोति तृप्तिं नूनं सुभाषितरसोऽन्यरसातिशायी ॥ १७ ॥ किं हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः । पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं यन्निष्पीडितपार्वणामृतकरस्यन्दोपमाः सूक्तयः ॥ १८ ॥ खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वान्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति । अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ १९ ॥

---

## विद्याप्रशंसा ।

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति । व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ २ ॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥ ३ ॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता । कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ४ ॥ ज्ञातिभिर्वण्ट्यते नैव चोरेणापि न नीयते । दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ५ ॥ संयोजयति विद्यैव नीचगापि नरं सरित् । समुद्रमिव दुर्धर्षं नृपं भाग्यमतःपरम् ॥ ६ ॥ विद्या शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये । आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना । न गुह्यगोपने शक्तं न च दंशनिवारणे ॥ ८ ॥ सद्विद्या यदि का चिन्ता वराकोदरपूरणे । शुकोऽप्यशनमाप्नोति हरे राम इति ब्रुवन् ॥ ९ ॥ वसुमतीपतिना नु सरस्वती बलवता रिपुणापि न नीयते । समविभागहरैर्न विभज्यते विबुधबोधबुधैरपि सेव्यते ॥ १० ॥ श्रियः प्रदुग्धे विपदो रुणद्धि यशांसि सूते मलिनं प्रमार्ष्टि । संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः किल कामधेनुः ॥ ११ ॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि । व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ १२ ॥ मातेव रक्षति पितेव हिते नियुङ्क्ते कान्तेव चापि रमयत्यपनीय खेदम् । लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या ॥ १३ ॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः । विद्या बन्धुजनो विदेशगमने विद्या परं देवतं विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥ १४ ॥ विद्या नाम नरस्य कीर्तिरतुला भाग्यक्षये चाश्रयो धेनुः कामदुघा रतिश्च विरहे नेत्रं

---

१ विकारम्. २ मान्द्यम्. ३ अन्यरसानतिक्रम्य वर्तत इत्यर्थः. ४ कर्णभूषणैः. ५ वस्त्रादिभिः. ६ पूर्णः. ७ किरणाः. ८ नास्त्युत्तमं यस्मात्. ९ विभज्यते. १० ज्ञानाय. ११ मक्षिका. १२ क्षुल्लकम्. १३ नियोजयति. १४ अन्तर्हितम्.

तृतीयं च सा । सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं तस्मादन्यमुपेक्ष्य सर्वविषयं विद्याधिकारं कुरु ॥ १९ ॥

---

## काव्यप्रशंसा ।

कान्यच्छामः सुराः स्वर्गे निवसामो वयं भुवि । किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ १ ॥ निरवद्यानि[1] पद्यानि यद्यनाढ्यस्य का क्षतिः । भिक्षुकक्षे विनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥ २ ॥ याता यान्ति च यातारो लोकाः शोकाधिका भुवि । काव्यसंबन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥ ३ ॥ नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः । विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥ ४ ॥ सद्भिर्मान्ये हिते काव्ये वृथा दुर्जनगर्जनम् । चण्डीशाङ्गीकृते चन्द्रेऽरुंतुदः किं विधुंतुदः ॥ ५ ॥ त एव पदविन्यासास्त एवार्थविभूतयः । तथापि नव्यं भवति काव्यं ग्रथनकौशलात् ॥ ६ ॥ सरसापि कवेर्वाणी हरिनामाङ्किता यदि । सादरं गृह्यते तज्ज्ञैः शुक्तिर्मुक्तान्विता यथा ॥ ७ ॥ काव्यस्याम्रफलस्यापि कोमलस्येतरस्य[3] च । बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ ८ ॥ शब्दशक्त्यैव कुर्वाणा सर्वदानवनिर्वृतिम्[4] । काव्यविद्या[5] श्रुतिगता स्यान्मृतस्यापि जीवनी ॥ ९ ॥ श्लिष्टा[6] सभङ्गा[7] सद्वर्ण्या निर्दोषा सद्गुणा मृदुः । नानाभङ्गीविलासा चेत्कृतिर्[8]विकृतिर्[9]अन्यथा ॥ १० ॥ धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥ ११ ॥ अध्वनि[10] पदग्रहपरं[11] मदयति हृदयं न वा न वा श्रवणम् । काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम् ॥ १२ ॥ अविदितगुणापि सुकवेर्भणितिः[12] कर्णेषु किरति[13] मधुधाराम् । अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ १३ ॥ ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम् । पुष्णाति कमलमम्भो लक्ष्म्या तु रविर्नियोजयति ॥ १४ ॥ कृतमन्दपदन्यासा[14] विकचश्री[15]श्चारुशब्दभङ्गवती[16] । कस्य न कम्पयते[17] कं जरेव जीर्णस्य सत्कवेर्वाणी ॥ १५ ॥ सरसा सालंकारा सुपदन्यासा सुवर्णमयमूर्तिः । आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥ १६ ॥ सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि । कविहृदयं विटहृदयं सरलं तरलं च सत्वरं भवति

---

१ उत्कृष्टानि. २ मर्मस्पृक्. ३ कठिनस्येत्यर्थः. ४ सर्वकालं नवसौख्यम्; (पक्षे) सर्वेषां रक्षसामानन्दम्. ५ कविता; (पक्षे) काव्यस्य शुक्रस्य विद्या. संजीविनीत्यर्थः. ६ नानार्थशब्दयुक्ता. ७ पदच्छेदवैचित्र्यादनेकार्थपदवती. ८ कविता. ९ रोगः. दुःखदत्वात्. १० व्यङ्ग्यार्थशून्यम्. यत्तु ध्वनिरुत्तमं काव्यं तद्भिन्नमित्यर्थः; (पक्षे) शिञ्जितशून्यम्. ११ अनुप्रासमात्रार्थं पदग्रहः परमुत्कृष्टो यत्र; (पक्षे) अत्यन्तचरणसंलग्नम्. १२ उक्तिः. १३ वर्षति. १४ सुप्तिङन्तादि; (पक्षे) चरणः. १५ प्रफुल्लशोभा; (पक्षे) विगता कचश्रीः केशशोभा यस्याः. १६ चारवो ये शब्दभङ्गा रचनाविशेषास्तद्वती; (पक्षे) स्खलितशब्दवती. १७ शिरः.

॥ १७ ॥ [1]भ्रमरहिता सा कचवत्स्त्रीणां कुचवच्च [2]सरसहिता । [3]लसदक्षरपीयूषाधरवत्कविता महात्मनां जीयात् ॥ १८ ॥ सत्पात्रो[4]र्पनयोचित[5]सत्प्रतिबिम्बाभिनववस्तु । कस्य न जनयति हर्षं सत्काव्यं मधुरवचनं च ॥ १९ ॥ सत्सूत्रसंविधानं सदलंकारं सुवृत्तमच्छिद्रम् । को धारयति न कण्ठे सत्काव्यं माल्यमर्घ्यं च ॥ २० ॥ यदसेवनीयम[6]सताम[7]मृतप्रायं [8]सुवर्णविन्यासम् । [9]सुरसार्थमयं काव्यं त्रिविष्टपं वा समं विद्मः ॥ २१ ॥ सत्कविरसना[10]शूर्पी [11]निस्तुषतरशब्दशालिपाके[12]न । तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥ २२ ॥ काव्यस्याक्षर[13]मैत्रीभाजो न च [14]कर्कशा न च [15]ग्राम्याः । शब्दा अपि पुरुषा अपि [16]साधव एवार्थबोधाय ॥ २३ ॥ [17]अन्तर्गूढान[18]र्थान[19]व्यञ्जयतः [20]प्रसादरहितस्य । [21]संदर्भस्य नदस्य च न [22]रसैः प्रीत्यै रसज्ञानाम् ॥ २४ ॥ आन्तरमिव बहिरिव हि व्यञ्जयितुं रसमशेषतः सततम् । असती सत्कविसूक्तिः काचघटीति त्रयं वेद ॥ २५ ॥ न ब्रह्मविद्या न च राज्यलक्ष्मीस्तथा यथेयं कविता कवीनाम् । लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोति ॥ २६ ॥ अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः । वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥ २७ ॥ सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः । न [23]शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥ २८ ॥ अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः । नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ॥ २९ ॥ रे रे खलाः शृणुत मद्वचनं समस्ताः स्वर्गे सुधास्ति सुलभा न तु सा भवद्भिः । कुर्मस्तदत्र भवतामुपकारकारि काव्यामृतं पिबत तत्परमादरेण ॥ ३० ॥ वाणी ममैव सरसा यदि रञ्जयित्री न प्रार्थये रसविदामवधानदानम् । सायंतनीषु मकरन्दवतीषु भृङ्गाः किं मल्लिकासु परमन्त्रणमारभन्ते ॥ ३१ ॥ आख्यातनामरचनाचतुरस्रसंधिसद्धात्वलंकृतिगुणं सरसं सुवृत्तम् । आसेदुषामपि दिवं कविपुंगवानां तिष्ठत्यखण्डमिह काव्यमयं शरीरम् ॥ ३२ ॥ सरसपरिषत्कर्णश्राव्यं कवित्वरसायनं विरसमनसां नेतुं नेहामहे श्रवणान्तिकम् । मृगमदरसं बिम्बौष्ठीनां कठोरकुचोचितं जघननिकटे क्लिन्ने लिम्पेज्जरन्महिषस्य कः ॥ ३३ ॥ अमृतजलधेः पायं पायं पयांसि पयोधरः किरति करकास्ताराकारा यदि स्फटिकावनौ । तदिह तुलनामा-

---

१ भ्रमरेभ्यो भृङ्गेभ्यो हिता; (पक्षे) भ्रमेण भ्रान्त्या रहिता. २ सरैर्मालाभिः सहिता; (पक्षे) सरसेभ्यो हिता. ३ लसच्छोभायमानमक्षरमविनाशि पीयूष तद्वन्माधुर्य यस्मिन्; (पक्षे) लसन्त्यक्षराणि वर्णा एव पीयूष यस्याम्. ४ स्थापनम् ५ सम्यग्बोधः. ६ सहृदयभिन्नानाम्; (पक्षे) पापवताम्. ७ अमृततुल्यम्; (पक्षे) अमृतबहुलम्. ८ शोभनाक्षराणां विन्यासो ग्रथन यत्र; (पक्षे) सुवर्णमयम्. ९ शोभनरसार्थप्रचुरम्; (पक्षे) देवसमूहबहुलम्. १० प्रस्फोटनम्. ११ निर्दोषः. १२ निर्दोषकाव्यास्वादेनेत्यर्थः. १३ एकवर्गपठितत्वादिरूपाम्. १४ श्रुतिकटव; (पक्षे) क्रूरमतयः. १५ अविदग्धप्रयुक्ता.; (पक्षे) ग्राममात्रवासिनः. १६ व्याकरणसिद्धाः (पक्षे) निर्मलमतयः. १७ अभ्यन्तरे गूढस्थितान्; (पक्षे) अभ्यन्तरे निलीनान्. १८ प्रतिपाद्यविषयान्; (पक्षे) पदार्थान्. १९ व्यञ्जनाविषयानकुर्वतः; (पक्षे) अप्रकटयतः; २० प्रसादेन काव्यगुणेन रहितस्य; (पक्षे) निर्मलतया रहितस्य. २१ काव्यस्य. २२ शृङ्गारादिः; (पक्षे) जलम्. २३ कश्मीरदेशम्.

नीयन्ते क्षणं कठिनाः पुनः सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम् ॥ ३४ ॥ समुल्लासो वाचां सरसमधुनिष्यन्दलहरी समुन्मेषद्वेषी सकलरसपोषोपजनकः। न केषामाधत्ते मनसि परितोषं नवनवैर्विलासैरुन्मीलद्विकचितमधूलीपरिमलः ॥ ३५ ॥ यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते। मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियां किमस्या नाम स्यादरसपुरुषानादरभरैः ॥३६॥ परिच्छिन्नस्वादोऽमृतगुडमधुक्षौद्रपयसां कदाचिच्चाभ्यासाद्व्रजति ननु वैरस्यमधिकम्। प्रियाबिम्बौष्ठे वा रुचिरकविवाक्येऽप्यनवधिर्नवानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥ ३७ ॥ प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना। यदात्मानो विद्याः परिणमति यश्चार्थवपुषा स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥ ३८ ॥ सदा मध्ये यासामियममृतनिष्यन्दसरसा सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्। प्रसादं ता एता घनपरिचिताः केन महतां महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥ ३९ ॥ नैव व्याकरणज्ञमेति पितरं न भ्रातरं तार्किकं दूरात्संकुचितेव गच्छति पुनश्चाण्डालवच्छान्दसात्। मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्तादरा काव्यालंकरणज्ञमेत्य कविताकान्ता वृणीते स्वयम् ॥ ४० ॥ रम्यार्थोक्तितनूज्ज्वला रसमयप्राणा गुणोल्लासिनी चेतोरञ्जकरीतिवृत्तिकवितापाकं वयो बिभ्रती। भावालंकरणोचितागमवती सर्वत्र निर्दोषताशय्यामञ्चति कामिनीव कविता कस्यापि पुण्यात्मनः ॥ ४१ ॥ निर्ह्रादं क्रकचक्षतैः किरति किं कर्णामृतं वल्लकी किंवा मुञ्चति मालती परिमलं पाषाणनिष्पेषणैः। इत्थं तारसकर्कशां धियमसौ जल्पैर्विकाल्याकुलैराकूटं कमनीयकान्तिदमितं कार्यं कथं स्यन्दते ॥४२॥ यन्त्राकृष्टसुवर्णसूत्रमिव यत्पद्यं सुमेरोस्तटादुन्मीलत्कुरुविन्दकन्दल इव स्वच्छः पदार्थोदयः। तत्राप्युल्लसदंशुकान्तविलसत्कान्ताकुचान्तोपमं व्यङ्ग्यं यत्र तदेव काव्यमितरद्वाग्देवतोपप्लवः ॥ ४३ ॥ गुम्फः पङ्कजकुड्मलद्युतिरुरस्तत्केसरोल्लासवानर्थोऽप्यन्तरसौरभप्रतिनिभं व्यङ्ग्यं चमत्कारि यत्। द्वित्रैर्यद्रसिकैश्चिरं सहृदयैर्भृङ्गैरिवास्वाद्यते तत्काव्यं न पुनः प्रमत्तकुकवेर्यत्किंचिदुज्जल्पितम् ॥ ४४ ॥ निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः। तद्वैदग्ध्यविदां सतामपि मनः किं नेहते वक्रतां धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ ४५ ॥ सानन्दप्रमदाकटाक्षविशिखैर्येषां न भिन्नं मनो यैः संसारसमुद्रपातविधुरेष्वन्येषु पोतायितम्। यैर्दुर्वारसरस्वतीविलसितं द्वित्रैः पदैर्गुम्फितं तेषामप्युपरि स्फुरन्ति मतयः कस्यापि पुण्यात्मनः ॥४६॥ वाणि त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां संप्राप्ता कवितालता परिणता सैवेयमुज्जृम्भते। त्वकर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरःकम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥४७॥

---

१ विदुषाम्. २ मूरवल्ली. ३ आनन्दस्य. ४ गच्छति.

## नाट्यप्रशंसा ।

प्रत्यङ्कमङ्कुरितसर्वरसावतारनव्योल्लसत्कुसुमराजिविराजिबन्धम् । घर्मेतरांशुरिव वक्रतयातिरम्यं नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥ १ ॥ देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा । त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥ २ ॥

## कुकाव्यनिन्दा ।

किं तेन किल काव्येन मृद्यमानस्य यस्य ताः । उदधेरिव नायान्ति रसामृतपरम्पराः ॥ १ ॥ यदा प्रकृत्यैव जनस्य रागिणो भृशं प्रदीप्तो हृदि मन्मथानलः । तदात्र भूयः किमनर्थपण्डितैः कुकाव्यहव्याहुतयो निवेशिताः ॥ २ ॥

## सामान्यकविप्रशंसा ।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः । नास्ति येषां यशःकाये[१] जरामरणजं भयम् ॥ १ ॥ प्रस्तावे हेतुयुक्तानि यः पठत्यविशङ्कितः । स कविस्तानि काव्यानि काव्ये तस्य परिश्रमः ॥ २ ॥ सुकवेः शब्दसौभाग्यं सुकविर्वेत्ति नापरः । कैलादवन्न[२] जानाति परः कङ्कणचित्रताम् ॥ ३ ॥ सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे । उत्पादका न बहवः कवयः शरभा इव ॥ ४ ॥ कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः । न ह्यकूपारवत्[३] कूपा वर्धन्ते विधुकान्तिभिः ॥ ५ ॥ कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि । यत्र हंसवयांसीव भुवनानि चतुर्दश ॥ ६ ॥ अपूर्वो भाति भारत्याः काव्यामृतफले रसः । चर्वणे सर्वसामान्ये स्वादुवित्केवलं कविः ॥ ७ ॥ उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् । जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ ८ ॥ ते धन्यास्ते महात्मानो तेषां लोके स्थिरं यशः । यैर्निबद्धानि काव्यानि ये च काव्येषु कीर्तिताः ॥ ९ ॥ अमृतोत्प्रेक्षणे रागं कुर्वन्त्युरगवज्जनाः । कविर्गरुडवन्मान्यमिन्द्रवज्रादि वृत्रकृत् ॥ १० ॥ काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि । तावत्सारस्वतं स्थानं कविरासाद्य तिष्ठति ॥ ११ ॥ अनन्तपदविन्यास[४]रचना सरसा[५] कवेः[६] । बुधो[७] यदि समीपस्थो न कुजन्मा[८] पुरो यदि ॥ १२ ॥ कविः करोति पद्यानि लालयत्युत्तमो जनः । तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम्[९] ॥ १३ ॥ कविः करोति काव्यानि स्वादु जानन्ति पण्डिताः । सुन्दर्या अपि लावण्यं पतिर्जानाति नो

---

१ कीर्तिशरीरे. २ स्वर्णकारः. ३ समुद्रः. ४ अनेकपदानि; (पक्षे) विष्णुपदम्. आकाशमित्यर्थः. ५ शृङ्गारादिरससहिता; (पक्षे) वृष्टिप्रदा. ६ कवयितुः; (पक्षे) शुक्रस्य. ७ पण्डितः; (पक्षे) बुधग्रहः. ८ नीच; (पक्षे) कुः पृथ्वी तस्या जन्म यस्य. मङ्गल इत्यर्थः. ९ सौगन्ध्यम्.

पिता ॥ १४ ॥ कविः पिता पोषयति पालको रसिकः पतिः। कवितायुवतेर्नूनं सोदरास्तु विवेकिनः ॥ १५ ॥ तत्त्वं किमपि काव्यानां जानाति विरलो भुवि। मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १६ ॥ कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति। कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः ॥ १७ ॥ कविवाक्यामृततीर्थस्नानैः पूता भृशं यशोदेहाः। येषां त एव भूपा जीवन्ति मृता वृथैवान्ये ॥ १८ ॥ काव्यप्रपञ्चचञ्चू रचयति काव्यं न सारविद्भवति। तरवः फलानि सुवते विन्दति सारं मतङ्गसमुदायः ॥ १९ ॥ विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते। फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥ २० ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः। कुलजा या सा जाया केवलजाया तु केवलं माया ॥ २१ ॥ अवयः केवलकवयः कीराः स्युः केवलं धीराः। वीराः पण्डितकवयस्तानवमन्ता तु केवलं गवयः ॥ २२ ॥ अहमपि परेऽपि कवयस्तथापि परमन्तरं परिज्ञेयम्। ऐक्यं रलयोरपि यदि तत्किं करभायते कलभः ॥ २३ ॥ दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्। रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ २४ ॥ शीलाविद्यामारुलामोरिकाद्याः काव्यं कर्तुं सन्ति विज्ञाः स्त्रियोऽपि। विद्यां वेत्तुं वादिनो निर्विजेतुं दातुं वक्तुं यः प्रवीणः स वन्द्यः ॥ २५ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः। स सर्व एवादिकवेः[2] प्रभावो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ २६ ॥ जयन्ति ते पञ्चमनादमित्रचित्रोक्तिसंदर्भविभूषणेषु। सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती ॥ २७ ॥ कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु। कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ २८ ॥ महीपतेः सन्ति न यस्य पार्श्वे कवीश्वरास्तस्य कुतो यशांसि। भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि तेषाम् ॥ २९ ॥ किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण। किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ ३० ॥ तर्केषु कर्कशतराः स्युरथापि पुंसां काले भवन्ति मृदवः कवितासु वाचः। दैत्येन्द्रशैलकुलिशं दयिताकपोले नाथस्य कोमलमुदाहरणं नखं नः ॥ ३१ ॥ अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः। निजघनमकरन्दस्यन्दपूर्णालवालः कनककलशसेकं नेहते किं रसालः ॥ ३२ ॥ पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ कवीनां काव्येन स्फुरति बुधमात्रस्य धिषणा। नवक्रीडावेशव्यसनपिशुनो यः कुलवधूकटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥ ३३ ॥ अयं मे वाग्गुम्फो विशदपदवैदग्ध्यमधुरः स्फुरद्बन्धो वन्ध्यो जडहृदि कृतार्थः कविहृदि। कटाक्षो वामाक्ष्या दरदलितनेत्रान्तगलितः किशोरे निःसारः स तु किमपि यूनः स्थगयति ॥ ३४ ॥ मदुक्तिश्चेद[3]-

१ वित्तः. २ वाल्मीकेः. ३ कविता.

न्तर्म[1]र्दयति सुधीभूय सुधियः किमस्या नाम स्याद[2]रसपुरुषानादरभरैः । यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते ॥ ३९ ॥ भुजतरुवनच्छायां येषां निषेव्य महौजसां जलधिरशना मेदिन्यासीदसावकुतोभया । स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥ ३६ ॥ यदि प्रभुरुदारधीः सुरसकाव्यकौतूहलस्तथैव च सभासदः सदसि तद्गुणग्राहिणः । सु[3]वर्णसदलंकृतिर्भवति तत्र नृत्योद्यता मदीयरसनानटी र[4]सघटीयमानन्दभूः ॥ ३७ ॥ वदन्तु क[5]तिचिद्ठठात्खफछठेति वर्णाञ्छठा घटः पट इती[6]तरे पटु रटन्तु वाक्पाटवात् । वयं बकुलमञ्जरीगलदमन्दमाध्वीझरीधुरीणपदरीतिभिर्भणितिभिः प्रमोदामहे ॥ ३८ ॥ हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात् । तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं क्रुद्धैर्नीतस्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ ३९ ॥ अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् । अ[7]र्थालंकृ[8]तिसद्र[9]सद्रवमुचां वाचां प्रशस्तिस्पृशां कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥ ४० ॥ मन्दं निक्षिपते प[10]दानि परितः श[11]ब्दं समुद्वीक्षते नाना[12]र्थाहरणं च का[13]ङ्क्षति मुद[14]लंकारमाकर्षति । आदत्ते सकलं सु[15]वर्णनिचयं धत्ते र[16]सान्तर्गतं दो[17]षान्वेषणतत्परो विजयते चोरोपमः सत्कविः ॥ ४१ ॥ स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः प्राणानां सततं प्रयाणपटहश्रद्धा न विश्राम्यति । त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतैस्तानाराध्य गुरून्विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः ॥ ४२ ॥ कल्याणं भगवत्कथाकथनतः काव्यं विधातुः कवेस्तस्यैवाङ्गतया क्वचिद्रचयतः शृङ्गारवीरादिकम् । को दोषो भविता यदत्र कविताशीलैः समाश्रीयते पन्था व्यास[18]वसुंधराश्रुतिभवग्रन्थादिषु प्रेक्षितः ॥ ४३ ॥ ते भूमीपतयो जयन्ति नतयो येषां द्विषद्भूभृतां ते वन्द्या यतयो विशन्ति मतयो येषां परे ब्रह्मणि । ते श्लाघ्याः कवयो वयोमदभरव्याजृम्भमाणाङ्गनादृक्पाता इव तोषयन्ति हृदयं येषां गिरां संचयाः ॥ ४४ ॥ भूतावेशनिवेशिताशय इव श्लोकं करोत्याशु यः श्लाघन्ते कविरद्भुतोऽयमिति तं मिथ्या जना विस्मिताः । द्वित्राण्येव पुरः पदानि रचयन्पश्चात्समालोचयन्दूरं यः कवितां निनीषति कविः कामीव स स्तूयताम् ॥४५॥ सत्यं सन्ति गृहे गृहेऽपि कवयो येषां वचश्चातुरी

---

१ तोषयति. २ नीरस. ३ शोभनान्यक्षराणि; (पक्षे) हेम. ४ काव्यरसः; (पक्षे) उदकम्. ५ वैयाकरणाः. ६ नैयायिका. ७ द्रव्यम्; (पक्षे) काव्यार्थान्. ८ भूषणानि; (पक्षे) काव्यालंकरणानि. ९ पारदः; (पक्षे) काव्यरसः. १० सुप्तिङन्तादीनि; (पक्षे) पादविक्षेपे चरणान्. ११ शब्दः शुद्धो वापशब्दो वेति सम्यग्विचारयति; (पक्षे) ध्वनिमाकर्णयति. १२ श्लेषेण ध्वनिना वानेकार्थानां सपादनम्; (पक्षे) सुवर्णरूप्यादीनां हरणम्. १३ इच्छति. १४ उपमाद्यलंकारम्; (पक्षे) कङ्कणादिभूषणम्. १५ सुष्ठु वर्णाना सचयम्; (पक्षे) हेमसंचयम्. १६ शृङ्गारादिरसमिश्रम्; (पक्षे) रसा पृथ्वी तदन्तर्गतम्. १७ काव्यदोषाणां गवेषणे तत्पर; (पक्षे) दोषा रात्रिस्तस्यामन्वेषण आसक्तः. १८ वसुधरा पृथ्वी तस्या. श्रुतिर्लक्षणया वल्मीकं तत्र भवो वाल्मीकिः.

स्वे हर्म्ये कुलकन्यकेव लभते स्वल्पैर्गुणैर्गौरवम् । दुष्प्रापः स तु कोऽपि कोविदमतिर्यद्वाग्रसग्राहिणां पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा ॥ ४६ ॥ धन्यास्ते कवयो यदीयरसनारूक्षाध्वसंचारिणी धावन्तीव सरस्वती द्रुतपदन्यासेन निष्क्रामति । अस्माकं रसपिच्छिले पथि गिरां देवी नवीनोदयत्पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते ॥ ४७ ॥ साहित्ये सुकुमारवस्तुनि दृढन्यासग्रहग्रन्थिले तर्के वा मयि संविधातरि समं लीलायते भारती । शय्या वास्तु मृदूत्तरच्छदपटा दर्भाङ्कुरैरास्तृता भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिर्योषिताम् ॥ ४८ ॥ येषां कोमलकाव्यकौशलकलालीलावती भारती तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते । यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपितास्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ ४९ ॥ तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती सा काव्ये मृदुलोक्तिसारसुरभौ स्यादेव मे कोमला । या प्रायः प्रियविप्रयुक्तवनिताहृत्कर्तने कर्तरी प्रेयोलालितयौवते न मृदुला सा किं प्रसूनावली ॥ ५० ॥ मातङ्गीमिव माधुरीं ध्वनिविदो नैव स्पृशन्त्युत्तमां व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी । कस्तूरीघनसारसौरभसुहृद्व्युत्पत्तिमाधुर्ययोर्योगः कर्णरसायनं सुकृतिनः कस्यापि संजायते ॥ ५१ ॥ यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् । कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ॥ ५२ ॥ मौलौ मन्दारदामभ्रमदलिपटलीकाकलीं श्रोणिबिम्बे कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमञ्जीरशिञ्जाम् । उत्सङ्गे कीरगीतिं स्तनभुवि मसृणं वल्लकीपञ्चमं वा यत्काव्ये दत्तकर्णा शिव शिव मनुते भारतीं भारमेव ॥ ५३ ॥ कस्यांचिद्वाचि कैश्चिन्ननु यदि विहितं दूषणं दुर्दुरूटैश्छिन्नं किं नस्तदा स्यात्प्रथितगुणवतां काव्यकोटीश्वराणाम् । वाहाश्चेद्गन्धवाहाधिकविहितजवाः पञ्चशश्चान्धखञ्जाः का हानिः शेरशाहक्षितिपकुलमणेरश्वकोटीश्वरस्य ॥ ५४ ॥

---

## विशिष्टकविप्रशंसा।

**अमरसिंहः ॥** प्रयोगव्युत्पत्तौ प्रतिपदविशेषार्थकथने प्रसत्तौ गाम्भीर्ये रसवति च काव्यार्थरचने । अगम्यायामन्यैर्दिशि परिणतावर्थवचसोर्मतं चेदस्माकं कविरमरसिंहो विजयते ॥१॥

**कालिदासः ॥** कवयः कालिदासाद्याः कवयो वयमप्यमी । पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥ २ ॥ निर्गतामलवाक्यस्य कालिदासस्य सूक्तिषु । प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥ ३ ॥ कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च । अन्ये कवयः कपयश्चापलमात्रं परं दधते ॥ ४ ॥ साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये । शिक्षा-

---

१ युवतिसमूहे. २ कर्पूर. ३ महिषः. ४ साभिप्रायम्. ५ रसोत्कर्षधायकरसनिष्ठगुणवत्. ६ शब्दगुणशालि.

समयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ ५ ॥ पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा । अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥ ६ ॥

**गणेश्वरः** ॥ गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः । तथा जयति भारती भगवती यथा सा सुधा मुधीभवति सुभ्रुवामधरमाधुरी म्लायति ॥ ७ ॥

**गुणाढ्यः** ॥ शश्वद्बाणद्वितीयेन नमदाकारधारिणा । धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः ॥ ८ ॥ समुद्दीपितकंदर्पा कृतगौरीप्रसाधना । हरलीलेव लोकस्य विस्मयाय बृहत्कथा ॥ ९ ॥ अतिदीर्घजीविदोषाद्व्यासेन यशोऽपहारितं हन्त । कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥ १० ॥

**गोविन्दराजः** ॥ इन्दुप्रभारसविदं विहगं विहाय कीराननं स्फुरसि भारति का रतिस्ते । आद्यं यदि श्रयसि जल्पतु कौमुदीनां गोविन्दराजवचसां च विशेष एषः ॥ ११ ॥

**जगन्नाथपण्डितः** ॥ कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः । नृत्यपि पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः ॥ १२ ॥ माधुर्यैरपि धुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकादीनाम् । वन्ध्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥ १३ ॥ गिरां देवी वीणागुणरणनहीनादरकरा यदीयानां वाचाममृतमयमाचामति रसम् । वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपतेर्धुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः ॥ १४ ॥ मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा कदाचित्केषांचित्खलु हि विदधीरन्नपि मुदम् । ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो न येषामानन्दं जनयति जगन्नाथभणितिः ॥ १५ ॥

**जयदेवः** ॥ साध्वी माध्वीक चिन्ता न भवति भवतः शर्करे कर्कशासि द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते । माकन्द क्रन्द कान्ताधर धरणितलं गच्छ यच्छन्ति भावं यावच्छृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि ॥ १६ ॥

**ज्योतिरीशः** ॥ यश्चत्वारि शतानि बन्धघटनालंकारभाञ्जि द्रुतं श्लोकानां विदधाति कौतुकवशादेकाहमात्रे कविः । ख्यातः क्ष्मातलमण्डलेष्वपि चतुःषष्टेः कलानां निधिः संगीतागमनागरो विजयते श्रीज्योतिरीशः कृती ॥ १७ ॥

**दण्डी** ॥ जाते जगति वाल्मीकौ कविरित्यभिधाभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ १८ ॥ त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः । त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः ॥ १९ ॥

**द्रोणः** ॥ सरस्वतीपवित्राणां जातिस्तत्र न देहिनाम् । व्यासस्पर्धी कुलालोऽभूद्यद्द्रोणो भारते कविः ॥ २० ॥

---

१ अन्वर्था. २ कामोद्दीपका; (पक्षे) भस्मीकृतमदना. ३ वर्णितगौरीमाहात्म्या; (पक्षे) अलंकृता पार्वती यया. ४ गुणाढ्यकृतो ग्रन्थः. ५ जीवित्वम्. ६ शवाः. ७ हे मधो. ८ आक्रोशं कुरु. ९ सर्वत.

**धनदः** ॥ यथेयं वाग्देवी सुकविमुखवासव्यसनिनी कुहूकण्ठीकण्ठे विलसति तथा चेदनवधि । तदा भूमीभागे निरुपमतमः किंचिदिव वा समाधत्ते साम्यं धनदभणितीनां मधुरिमा २१

**नरहरिः** ॥ यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते तदा गतमदा मदालसमरालबालारवाः । न विभ्रमचरीकरीभवति चाधरी माधुरी सुधाकरसुधाझरीमधुकथा वृथा जायते ॥ २२ ॥

**प्रवरसेनः** ॥ कीर्तिः प्रवरसेनस्य प्रयाता कुमुदो[1]ज्ज्वला । सागरस्य परं पारं[2] कपिसेनेव सेतुना[3] ॥ २३ ॥

**बाणः** ॥ हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः । भवेत्कविकुरंगाणां चापलं तत्र कारणम् ॥ २४ ॥ शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते । शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥ २५ ॥ जाता शिखण्डिनी[4] प्राग्यथा शिखण्डी तथावगच्छामि । प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ २६ ॥ श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽलंकारे कतिचित्सदर्थविषये चान्ये कथावर्णके । आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरीसंचारे कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥ २७ ॥

**बिह्लणः** ॥ बिन्दु[5]द्वन्द्वतरङ्गिताग्रसरणिः कर्ता शिरोबिन्दुकं कर्मेति प्रतिबोधितान्वयविदो ये येऽपि तेभ्यो नमः । ये तु ग्रन्थसहस्रशाणकषणत्रुट्यत्कलङ्कैर्गिरामुल्लेखैः कवयन्ति बिह्लणकविस्तेष्वेव संनह्यति ॥ २८ ॥

**भट्टारहरिचन्द्रः** ॥ पद[6]बन्धोज्ज्वलो हारी[7] कृतवर्ण[8]क्रमस्थितिः । भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ २९ ॥

**भवभूतिः** ॥ सुकविद्वितयं मन्ये निखिलेऽपि महीतले । भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः ॥ ३० ॥ भवभूतेः[9] संबन्धाद्भूधरभूरेव[10] भारती[11] भाति । एतत्कृतकारुण्ये[12] किमन्यथा रोदिति ग्रावा[13] ॥ ३१ ॥ रत्नावलीपूर्वकमन्यदास्तामसीमभोगस्य वचोमयस्य । पयोधरस्येव हिमाद्रिजायाः परं विभूषा भवभूतिरेव ॥ ३२ ॥

**भासः** ॥ सूत्रधार[14]कृतारम्भैर्नाटकैर्बहु[15]भूमिकैः । सपताकै[16]र्यशो लेभे भासो देवकुलैरिव॥३३॥

**मयूरः** ॥ तावत्कविविहंगानां ध्वनिर्लोकेषु शस्यते । यावन्नो विशते श्रोत्रे मयूर-

---

१ कुमुदवच्छुभ्रा; (पक्षे) कुमुदो नाम कपि. शोभते यत्र. २ दिगन्तरे; (पक्षे) समुद्रमुल्लङ्घ्य लङ्कादेशे. ३ काव्यविशेषः; (पक्षे) सेतुबन्धः. ४ द्रुपदपुत्री. ५ यथा 'रावणः सीतां जहार' इति वाक्ये 'रावणः' इति पदं बिन्दुद्वन्द्व(विसर्ग)युक्तं कर्तृ, 'सीतां' इति शिरोबिन्दु(अनुस्वार)युक्तं कर्म. एवमेव कर्तृकर्मपदे सर्वत्र भवत इति निश्चयवन्तो जनाः. ६ सुप्तिङन्ताद्यक्षरसमूहः; (पक्षे) चरणः. ७ मनोहरः; (पक्षे) मुक्ताहारैर्युक्तः. ८ अक्षराणि; (पक्षे) ब्राह्मणक्षत्रियादिः. ९ शिवैश्वर्यस्य. १० नगेन्द्रकन्या. ११ सरस्वती. १२ भवभूतिकृतकरुणारसप्रधाने नाटके. उत्तररामचरित इत्यर्थः. १३ 'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' इति पद्ये. १४ नाटकाचार्यः. (पक्षे) वास्तुविद्याज्ञाता. १५ प्रस्तावना; (पक्षे) अट्टालादिगृहावयवविशेष.. १६ नाटकावयवविशेषः; (पक्षे) ध्वजः.

मधुरध्वनिः ॥ ३४ ॥ दर्पं कविभुजंगानां गता श्रवणगोचरम् । विषविद्येव मायूरी मायूरी वाङ्गिकृन्तति ॥ ३५ ॥

**मातङ्गदिवाकरः** ॥ अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः । श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥ ३६ ॥

**मुरारिः** ॥ [1]भवभूतिमनादृत्य निर्वाणमतिना मया । [2]मुरारिपदचिन्तायामिदमाधीयते मनः ॥ ३७ ॥ मुरारिपदभक्तिश्चेत्तदा [3]माघे रतिं कुरु । मुरारिपदभक्तिश्चेत्तदा [4]माघे रतिं कुरु ॥ ३८ ॥ देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः । अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति [5]मन्थाचलः ॥ ३९ ॥

**रत्नखेटदीक्षितः** ॥ विपश्चिताम[6]पश्चिमे विवादकेलिनिश्चले सपत्नजित्वयत्नतस्तु रत्नखेटदीक्षिते । बृहस्पतिः क्व जल्पति प्रसर्पति क्व [7]सर्पराडसंमुखस्तु षण्मुखः सुदुर्मुखश्चतुर्मुखः ४०

**राजशेखरः** ॥ बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम् । स्थितः पुनर्यो भवभूतिरेखया स वर्तते संप्रति राजशेखरः ॥ ४१ ॥ पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः । भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ ४२ ॥

**वाल्मीकिः** ॥ कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् । चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥ ४३ ॥ स[8]दूषणापि निर्दोषा स[9]खरापि सुकोमला । नमस्तस्मै कृता येन रम्या रामायणी कथा ॥ ४४ ॥ योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः । वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥ ४५ ॥ लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुन[10]राद्यानां वाचमर्थोऽनुधावति ॥ ४६ ॥ आदिकवी चतुरास्यौ कमलजवल्मीकजौ वन्दे । लोकश्लोकविधात्रोर्ययोर्भिदा [11]लेशमात्रेण ॥ ४७ ॥ तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचाम् । सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ॥ ४८ ॥ [12]विहितघनालंकारं [13]विचित्रवर्णावलीमयस्फुरणम् । शक्रायुधमिव [14]वैक्रं [15]वल्मीकभुवं मुनिं नौमि ॥ ४९ ॥ सति काकुत्स्थकुलोन्नतिकारिणि रामायणेऽपि किं काव्यम् । रोहति कुल्या गङ्गापूरे किं बहुरसे व-

१ शिवैश्वर्यम्; (पक्षे) एतन्नामान कविम्. २ विष्णुः; (पक्षे) कविविशेष. ३ माघकाव्ये. ४ अघे पातके मा प्रीतिं कुर्वित्यर्थः. ५ मन्दराद्रिः. ६ पूर्व इत्यर्थः. ७ वासुकिः. ८ दूषणो राक्षसविशेषः; (पक्षे) काव्यदोषाः. ९ खरो राक्षसविशेषः; (पक्षे) कर्कशत्वम्. १० वाल्मीक्यादीनाम्. ११ ले लकारे शकारमात्रयोगेण लोकश्लोकयोर्भेदः; (पक्षे) किंचिन्मात्रम्. १२ विहिता घना बहवोऽलंकारा उपमादयो येन तम्; (पक्षे) विहित घनानां मेघानामलंकरण येन तम्. १३ विचित्रा वर्णानामक्षराणां यावली पङ्क्तिस्तत्प्रचुरं स्फुरण स्फूर्तिर्यस्य तम्; (पक्षे) वर्णा नीलपीतादयस्तत्पङ्क्तिविकारः स्फुरणमुत्पत्तिर्यस्य तम्. १४ वक्रोक्तिकुशलम्; (पक्षे) यथाश्रुतम्. १५ वाल्मीकिम्; (पक्षे) वल्मीकाज्जातम्. इन्द्रधनुषोऽपि तत एवोत्पत्तिरिति लौकिकम्. 'वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य' इति कालिदासः.

हति ॥ ९० ॥ भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः । पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किमप्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ ९१ ॥

**विजया** ॥ सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ । या वैदर्भगिरां वासः कालिदासादनन्तरम् ॥ ९२ ॥

**विज्जिका** ॥ नीलोत्पलदलश्यामां विज्जिकां मामजानता । वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥ ९३ ॥

**व्यासः** ॥ नमः सर्वविदे तस्मै व्यासाय कविवेधसे । चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ ९४ ॥ अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शंभुर्भगवान्बादरायणः ॥ ९५ ॥ श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः । तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे ॥ ९६ ॥ व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे । भूषणतयैव संज्ञां यदङ्कितां भारती वहति ॥ ९७ ॥

**शाकल्लमल्लः** ॥ [1]एकोऽभूत्पुलिनात्ततस्तु [2]नलिनाच्चान्योऽपि [3]नाकोरभूत्प्राच्यास्ते त्रय एव दिव्यकवयो दीव्यन्तु देव्या गिरा । अर्वाचो यदि गद्यपद्यरचनाचातुर्यवागुद्धतास्तान्सर्वानतिशय्य खेलतितरां शाकल्लमल्लः कविः ॥ ९८ ॥

**सातवाहनः** ॥ [4]अविनाशिनमग्राम्यमकरोत्सातवाहनः । विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥ ९९ ॥

**सुदर्शनः** ॥ न मुग्धदयिताधरे न विषभाजि रत्नाकरे न राहुमुखकोटरे न किल तार्क्ष्यपक्षान्तरे । सुदर्शनकवीश्वरे रसिकचक्रचूडामणौ गुणौकसि सुधा बुधास्त्यजत सान्द्रचन्द्रभ्रमम् ॥ १०० ॥

**सुबन्धुः** ॥ कवीनामगलद्दर्पो नूनं वासवदत्तया । शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥ १०१ ॥

**कविवृन्दम्** ॥ उपमा कालिदासस्य भारवेरर्थगौरवम् । दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥ १०२ ॥ माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे । स्मरन्ति भारवेरेव कवयः कपयो यथा ॥ १०३ ॥ श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः । त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥ १०४ ॥ प्राचेतसव्यासपराशराद्याः प्राञ्चः कवीन्द्रा जगदर्चितास्ते । गोष्ठी नवीनापि महाकवीनां पूज्या गुणज्ञैर्भुवनोपकर्त्री ॥ १०५ ॥ धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां

---

१ व्यासः. २ भारतचिह्निताम्. ३ व्यासः. ४ ब्रह्मदेवः. ५ वाल्मीकिः. ६ चिरस्थायिनम्; (पक्षे) नाशं न गच्छन्तम्. ७ मात्राछन्दादि; (पक्षे) मूल्यवन्तम्. ८ ग्रन्थविशेषः; (पक्षे) भाण्डागारम्. ९ एतनाम्ना प्रबन्धेन; (पक्षे) इन्द्रदत्तया. १० इन्द्रियविशेषम्; (पक्षे) कुरुसेनानायक..

रत्नानि वै वररुचिर्नैव विक्रमस्य ॥ ६६ ॥ यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो भासो हासः कविकुलगुरुः कालिदासो विलासः। हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः केषां नैषा कथय कविताकामिनी कौतुकाय ॥ ६७ ॥ भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कविर्मेण्ठो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः। दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥ ६८ ॥ वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिः गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः। शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोईकविक्ष्मापतिः ॥ ६९ ॥ माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः। श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥ ७० ॥

---

## कुकविनिन्दा।

अप्रगल्भाः पदन्यासे[2] जननीरागहेतवः[3]। सन्त्येके बहुलालापाः[4] कवयो बालका इव ॥ १ ॥ कविभिर्नृपसेवासु वित्तालंकारहारिणी। वाणी वेश्येव लोभेन परोपकरणीकृता ॥ २ ॥ अन्यवर्णपरावृत्त्या[5] बन्धचिह्ननिर्गूहनैः[6]। अनाख्यातः सतां मध्ये कविश्चोरो विभाव्यते ॥ ३ ॥ प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः[7]। कोकिला इव जायन्ते वाचालाः कामकारिणः ॥ ४ ॥ किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी। कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ॥ ५ ॥ किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः। परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ६ ॥ मुखमात्रेण काव्यस्य करोत्यहृदयो जनः। छायामच्छामपि श्यामां राहुस्तारापतेरिव ॥ ७ ॥ श्लोकार्थस्वादकाले तु शब्दोत्पत्तिविचिन्तकाः। नीवीविमोक्षवेलायां वस्त्रमौल्यविचिन्तकाः ॥ ८ ॥ अधिभिल्लपल्लिगल्लं बल्लवपल्लवोऽपि वाचालः। नागरनरवरपरिषदि कस्य मुखादक्षरं क्षरति ॥ ९ ॥ गणयन्ति नापशब्दं[8] न वृत्तभङ्गं[9] क्षयं न चार्थस्य[10]। रसिकत्वेनाकुलिता वेश्यापतयः[11] कुकवयश्च ॥ १० ॥ दुर्जनहुताशदग्धं काव्यसुवर्णं विशुद्धिमुपयाति। दर्शयितव्यं तस्मान्मत्सरिमनसः प्रयत्नेन ॥ ११ ॥ कविरनुहरति च्छायां पदमेकं पादमेकमर्धं वा। सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तस्मै ॥ १२ ॥ विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे। निन्दति कञ्चुकिकारं प्रायः शुष्कस्तनी नारी ॥ १३ ॥ अतिरमणीये काव्ये पिशुनोऽन्वेषयति

---

१ कविविशेषः. २ सुप्तिङन्तादि; (पक्षे) अङ्घ्रिः. ३ जनानां नीरागो विरसता तस्य हेतवः; (पक्षे) जनन्या मातू रागहेतवः प्रीतिहेतुभूताः. ४ बहुला आलापा येषाम्; (पक्षे) बह्वी या लाला तां पिबन्ति ते. ५ वर्णान्तरपरिवर्तनेन. ६ गोपनैः. ७ रक्ततया; (पक्षे) कोपेन. ८ दुःशब्दम्. ९ इन्द्रवज्रादि; (पक्षे) शीलम्. १० वाच्यस्य; (पक्षे) द्रव्यस्य. ११ जाराः.

दूषणान्येव। अतिरमणीये वपुषि व्रणमेव हि मक्षिकानिकरः ॥ १४ ॥ द्राघीयसा[1] धाष्टर्य-गुणेन युक्ताः कैः कैरपूर्वैः परकाव्यखण्डैः। आडम्बरं[2] ये वचसां वहन्ति ते केचिदार्याः कवयो जयन्ति ॥ १५ ॥ कर्णामृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान्खलस्य। अवेक्षते केलिवनं प्रविष्टः क्रमेलकः[3] कण्टकजालमेव ॥ १६ ॥ साहित्यपाथोनिधिमन्थनोत्थं काव्यामृतं रक्षत हे कवीन्द्राः। यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति ॥ १७ ॥ गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः क्वापि कवीश्वराणाम्। रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः ॥ १८ ॥ काव्यं करोषि किमु ते सुहृदो न सन्ति ये त्वामुदीर्णपवनं न निवारयन्ति। गव्यं घृतं पिब निवातगृहं प्रविश्य वाताधिका हि पुरुषाः कवयो भवन्ति ॥ १९ ॥ हठादाकृष्टानां कतिपयपदानां रचयिता जनः स्पर्धालुश्चेद्‌-हह कविना वश्यवचसा। भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ घटानां निर्मातु-स्त्रिभुवनविधातुश्च कलहः ॥ २० ॥ स्तुवद्भवनिवर्तके सति हरौ कविः सूक्तिभिः करोति वरवर्णिनीचरितवर्णनं गर्हितम्। अनीतिरवनीपतिर्बत शुनीतनुं मौक्तिकैर्विभूषयति देवतामुकुटभागयोग्यैर्यथा ॥ २१ ॥ श्रीनाथस्तवनानुरूपकवनां वाणीं मनोहारिणीं कष्टं हा कवयः कदर्यकुटिलक्ष्मापालसात्कुर्वते[4]। दूरोपाहृतसौरसैन्धवपयो[5] देवाभिषेकोचितं संसेके विनियुञ्जते सुमतयः शाखालवालस्य किम् ॥ २२ ॥ लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः। अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां वृकाः सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥ २३ ॥ स्वाधीनो रसनाञ्चलः परिचिताः शब्दाः कियन्तः क्वचित्क्षोणीन्द्रो न नियामकः परिषदः शान्ताः स्वतन्त्रं जगत्। तद्यूयं कवयो वयं वयमिति प्रस्तावनाहुंकृतिस्वच्छन्दं प्रतिसद्म गर्जत वयं मौनव्रतालम्बिनः ॥ २४ ॥ स्वर्गानर्गलनिर्गलत्सुरसरित्पाथःप्रपातप्रथाप्रत्याख्यानपटीयसापि वचसा जिह्रेति जिह्रेहनः। एकद्व्यक्षरकष्टपिष्टरचनादुर्वारगर्वग्रहाः कन्थामात्रकुविन्दकाः कवयितुं सज्जन्ति लज्जामुचः ॥ २५ ॥

## पण्डितप्रशंसा।

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः। तस्मान्मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ॥ १ ॥ यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि। निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ २ ॥ किं कुलेन विशालेन[7] विद्याहीनस्य देहिनः। अकुलीनोऽपि विद्यावान्देवैरपि स पूज्यते ॥ ३ ॥ रोहणं सूक्तिरत्नानां वन्दे वृन्दं विपश्चिताम्। यन्मध्यपतितो नीचः काचोऽप्युच्चैर्महीयते[8] ॥ ४ ॥ विद्वानेव विजानाति विद्वज्जनपरिश्रमम्। नहि

[1] अतिदीर्घेण. [2] प्रागल्भ्यम्. [3] उष्ट्रः. [4] राजवर्णनपराम्. [5] गङ्गाजलम्. [6] वृक्षवदाचरति. [7] विस्तीर्णेन. [8] पूज्यते.

वन्ध्या विजानाति गुर्वी[1] प्रसववेदनाम्[2] ॥ ५ ॥ प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ ६ ॥ विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ७ ॥ अलंकरोति यः श्लोकं शुक एव न मध्यमः । अलं[3] करोति यः श्लोकं शुक[4] एव नमध्यमः ॥ ८ ॥ सदोषमपि[5] निर्दोषं भवत्यग्रे विपश्चितः । रामस्येवार्जुनवपुः[6][7] कवेश्च सरसं वचः ॥ ९ ॥ गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः[8][9] । शिरसा श्लाघते[10] पूर्वं परं कण्ठे निर्यच्छति[11] ॥ १० ॥ स्थिरा शैली[12] गुणवतां खलबुद्ध्या न बाध्यते । रत्नदीपस्य हि शिखा वात्ययापि न नाश्यते ॥ ११ ॥ वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् । हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा ॥ १२ ॥ विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः । याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ १३ ॥ अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् । अव्ययेभ्योऽपि[13] ये चार्थान्निष्कर्षन्ति सहस्रशः ॥ १४ ॥ स एव रसिको लोके श्रुत्वा काव्यं परैः कृतम् । उत्पद्यते च युगपन्नयनेऽक्ष्णोश्च यस्य वाः[14] ॥ १५ ॥ श्रुते महाकवेः काव्ये नयने वदने च वाः[15] । युगपद्यस्य नोदेति स वृषो महिषोऽथवा ॥ १६ ॥ विद्या विनयोपेता हरति न चेतांसि कस्य मनुजस्य । काञ्चनमणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥ १७ ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणामं च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ १८ ॥ कवीश्वराणां वचसां विनोदैर्नन्दन्ति विद्यानिधयो न चान्ये । चन्द्रोपला एव करैर्हिमांशोर्मध्ये शिलानां सरसा भवन्ति ॥ १९ ॥ शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स विद्वान् । सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ २० ॥ न पण्डिताः साहसिका भवन्ति श्रुत्वापि ते संतुलयन्ति तत्त्वम् । तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥ २१ ॥ इभतुरगशतैः प्रयान्तु मूढा धनरहिता विबुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतैर्न[16] समा हि राजहंसैः ॥ २२ ॥ सन्तश्चेदिह गुणबिन्दवो बुधस्तान्संतुष्टः कवलयति स्फुटेऽपि दोषे । संयुक्तानपि पयसः कणान्विचिन्वन्नम्भस्तो ग्रसति हि मङ्क्षु मल्लिकाक्षः[17] ॥ २३ ॥ अन्या जगद्धितमयी[18] मनसः

---

१ महतीम्. २ प्रसवकाले या वेदना ताम्. ३ पर्याप्तं करोति. तिरस्करोतीत्यर्थः. ४ नमध्यमः शुको नकारो मध्ये यस्यैवंविधः शुनकः. श्वा इति भावः. ५ दोषसहितम्; (पक्षे) दोषो हस्तास्तत्सहितम्. ६ परशुरामस्य. ७ सहस्रार्जुनशरीरम्. ८ जानन्; (पक्षे) उपाददानः. ९ गरलम्. १० अभिनन्दयति; (पक्षे) धारयति. ११ निरुणद्धि. वाचा कण्ठाद्बहिर्नोद्घाटयतीत्यर्थ; (पक्षे) स्थापयति. १२ रीतिः. १३ अव्ययेभ्यः. अव्ययानामनेकार्थत्वात्; (पक्षे) व्ययरहितेभ्यः. कृपणेभ्य इति यावत्. १४ उदकम्; (पक्षे) 'वाः वाः' इति लौकिकशब्द.. १५ नयने वाः सलिलम्. आनन्दाश्रुजलमित्यर्थः. वदने च वाः 'वाह वाह' इति प्रशंसाबोधको देशी शब्दः. १६ सैकतगतैः. १७ राजहंसः. १८ लोकहितप्रचुरा.

प्रवृत्तिरन्यैव कापि रचना वचनावलीनाम् । लोकोत्तरा च कृतिराकृतिरङ्गहृद्या विद्यावतां सकलमेव गिरां दवीयः[1] ॥ २४ ॥ अधिगतपरमार्थान्पण्डितान्मावमंस्थास्[2]तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि[3] । मदमिलितमिलिन्दश्यामगण्डस्थलानां न भवति बिसतन्तुर्वारणं वारणानाम्[4] ॥ २५ ॥ शास्त्रोपस्कृतशब्दसुन्दरगिरः[5] शिष्यप्रदेयागमा विख्याताः कवयो[6] वसन्ति विषये[7] यस्य प्रभोर्निर्धनाः । तज्जाड्यं वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः[8] पातिताः ॥ २६ ॥ हर्तुर्याति न गोचरं किमपि[9][10] शं[11] पुष्णाति सर्वात्मना ह्यर्थिभ्यः प्रतिपाद्यमानम्[12]निशं[13] प्राप्नोति वृद्धिं पराम् । कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमेतद्धनं येषां तान्प्रति मानमुज्झत[14] नृपाः कस्तैः सह स्पर्धते[15] ॥ २७ ॥

---

## कुपण्डितनिन्दा ।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १ ॥ मूर्खचिह्नानि षडिति गर्वो दुर्वचनं मुखे । विरोधी विषवादी च कृत्याकृत्यं न मन्यते ॥ २ ॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव[16] सूकरः ॥ ३ ॥ उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ ४ ॥ वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह । न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि[17] ॥ ५ ॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादपि शीतलः । यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ ६ ॥ अन्तःसारविहीनस्य सहायः किं करिष्यति । मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ ७ ॥ यस्य नास्ति विवेकस्तु केवलं यो बहुश्रुतः । न स जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥ ८ ॥ रूपयौवनसंपन्ना विशालकुलसंभवाः । विद्याहीना न शोभन्ते निर्गन्धाः किंशुका इव ॥ ९ ॥ विद्याविधिविहीनेन किं कुलीनेन देहिनाम् । अकुलीनोऽपि यो विद्वान्दैवतैरपि पूज्यते ॥ १० ॥ मदोपशमनं शास्त्रं खलानां कुरुते मदम् । चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥ ११ ॥ ज्ञानविद्याविहीनस्य विद्याजालं निरर्थकम् । कण्ठसूत्रं विना नारी अनेकाभरणैर्युता ॥ १२ ॥ मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति हि । कः सुधीः संत्यजेद्भाण्डं शुल्क[18]स्यैवातिसाध्वसात् ॥ १३ ॥ माता शत्रुः पिता वैरी येन बालो न पाठितः । न शोभते

---

१ अतिदूरम्. २ अवमानं मा कुरु. ३ रोधं न कुरुते. ४ गजानाम्. ५ शास्त्रसंस्कारेण शुद्धा ये शब्दास्तैः सुन्दरा गिरो येषां ते. ६ पण्डिताः. ७ देशे. ८ मौर्ख्यम्. ९ मूल्यतः. १० अचिन्त्यम्. ११ सुखम्. १२ दीयमानम्. १३ निरन्तरम्. १४ त्यजत. १५ स्पर्धां करोति. १६ विष्ठा. १७ सुरेन्द्राणां भवनेषु. स्वर्गादिलोकेष्वपीति भावः. १८ नेतव्यानेतव्यवस्तुसंबन्धी राजग्राह्यो भागः.

सभामध्ये हंसमध्ये बको यथा ॥ १४ ॥ पुस्तकेषु च नाधीतं नाधीतं गुरुसंनिधौ । न शोभन्ते सभामध्ये हंसमध्ये बको यथा ॥ १५ ॥ विद्यया शस्यते लोके पूज्यते चोत्तमैः सदा । विद्याहीनो नरः प्राज्ञः सभायां नैव शोभते ॥ १६ ॥ शोभते विदुषां मध्ये नैव निर्गुणमानसः । अन्तरे तमसां दीपः शोभते नार्कतेजसाम् ॥ १७ ॥ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः । अबोधोपहताश्चान्ये जीर्णमङ्गे[1] सुभाषितम् ॥ १८ ॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति[2] ॥ १९ ॥ गुणिगणगणनारम्भे न पतति कठिनी सुसंभ्रमाद्यस्य । तेनाम्बा यदि सुतिनी[3] वद वन्ध्या कीदृशी भवति ॥ २० ॥ निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि । पश्य धनुर्गुणशून्यं निर्जीवं यदिह शंसन्ति ॥ २१ ॥ अन्तर्भूतो निवसति जडे[4] जडः[5] शिशिरमहसि हरिण इव । अजडे शशीव तपने स तु प्रविष्टोऽपि निःसरति ॥ २२ ॥ साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः[6] । तृणं न खादन्नपि जीवमानस्तद्भागधेयं[7] परमं पशूनाम् ॥ २३ ॥ जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः । प्राप्ताग्निनिर्वापणगर्वमम्बु रत्नाङ्कुरज्योतिषि किं करोति ॥ २४ ॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ २५ ॥ मुक्ताफलैः किं मृगपक्षिणां च मृष्टान्नपानं किमु गर्दभानाम् । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥ २६ ॥ अज्ञातपाण्डित्यरहस्यमुद्रा ये काव्यमार्गे दधतेऽभिमानम् । ते गारुडीयाननधीत्य मन्त्रान्हालाहलास्वादनमारभन्ते ॥ २७ ॥ अवद्यजम्बालगवेषणाय कृतोद्यमानां खलसैरिभाणाम् । कवीन्द्रवाङ्निर्जरनिर्झरिण्यां संजायते व्यर्थमनोरथत्वम् ॥ २८ ॥ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटापि शोभते न नेत्रहीना कनकैरलंकृता ॥ २९ ॥ विविनक्ति न बुद्धिदुर्विधः[9] स्वयमेव स्वहितं पृथग्जनः[10] । यदुदीरितमप्यदः परैर्न विजानाति तदद्भुतं महत् ॥ ३० ॥ विदुरेष्यदपायमात्मना[11] परतः श्रद्दधतेऽथ वा बुधाः । न परोपहितं न च स्वतः प्रमिमीतेऽनुभवादृतेऽल्पधीः[12] ॥ ३१ ॥ अथ वाभिनिविष्टबुद्धिषु[13] व्रजति व्यर्थकतां सुभाषितम् । रविरागिषु शीतरोचिषः[14] करजालं कमलाकरेष्विव ॥ ३२ ॥ इतरकर्मफलानि यदृच्छया[15] विलिख तानि सहे चतुरानन । अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥ ३३ ॥ कतिचिदुद्धतनिर्भरमत्सराः कतिचिदात्मवचःस्तुतिशालिनः । अहह केऽपि निरक्षरकुक्षयस्तदिह संप्रति कं प्रति मे श्रमः ॥ ३४ ॥ ये के विचित्ररसशालिषु सत्कवीनां सूक्तेषु कर्णपथगामिषु ना-

---

१ विकृतिभावं गतम्. २ रञ्जयितुमसमर्थो भवति. ३ पुत्रिणी. ४ मूर्खे; (पक्षे) जलरूपत्वात्. ५ मूर्खः; (पक्षे) पशुत्वात्. ६ शृङ्गम्. ७ दैवम्. ८ कर्दमः. ९ बुद्धिशून्यः. १० पामरजनः. ११ आगामिनम्. १२ जानाति. १३ दुराग्रहग्रस्तचित्तेषु. १४ शीतभानोः. १५ स्वेच्छया.

द्रियन्ते । ते मालतीपरिमलेष्वपि कन्दलत्सु नासापुटं करतलेन पिदध्युरेव ॥ ३५ ॥ मद्वाणि मा कुरु विषादमनादरेण मात्सर्यमग्नमनसां सहसा खलानाम् । काव्यारविन्दमकरन्दमधुव्रतानामास्येषु धास्यसितमां कियतो विलासान् ॥ ३६ ॥ अरण्यरुदितं कृतं शव[1]-शरीरमुद्वर्तितं[2] स्थले[3]ऽब्जमवरोपितं सुचिरमूषरे वर्षितम् । श्वपुच्छमवनामितं[4] बधिरकर्ण[5]-जापः कृतो धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ ३७ ॥ प्रसह्य[6] मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् । भुजंगमपि कोपितं शिरसि पुष्पवद्धारयेन्न तु प्रतिनिविष्ट[7]मूर्खजनचित्तमाराधयेत् ॥ ३८ ॥ लभेत सिकतासु[8] तैलमपि यत्नतः पीडयन्पिबेच्च मृगतृष्णिकासु[9] सलिलं पिपासार्दितः । कदाचिदपि पर्यटञ्शशविषाणमा[10]-सादयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ३९ ॥ यदा किंचिज्ज्ञोऽहं द्विप[11] इव मदान्धः समभवं तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं[12] मम मनः । यदा किंचित्किंचिद्बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ४० ॥ शिरः शार्वं[13] स्वर्गात्पशुपतिशिरस्तः[14] क्षितिधरं महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् । अधोऽधो गङ्गेयं पदमुपगता स्तोकमधुना विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ४१ ॥ वितरति[15] गुरुः प्राज्ञे विद्यां तथैव यथा जडे[16] न तु खलु तयोर्ज्ञाने शक्तिं करोत्युपहन्ति[17] वा । भवति च पुनर्भूयान्[18]भेदः फलं प्रति तद्यथा प्रभवति रुचां बिम्बोद्ग्राहे[19] मणिर्न मृदां[20] चयः ॥ ४२ ॥ अविनयभुवामज्ञानानां शमाय भवन्नपि प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये । फणिभयभृतामस्तूच्छेदक्षमस्तमसामसौ विषधरफणारत्नालोको भयं तु भृशायते ॥ ४३ ॥ व्यासादीन्कवि[21]पुंगवाननुचितै[22]र्वाक्यैः सलीलं हसन्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठ । काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधैर्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ४४ ॥ ये संसत्सु विवादिनः परयशःशल्येन शूलाकुलाः कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद्गुणाच्छादनम् । तेषां रोषकषायितोदरदृशां[23] कोपोष्णनिःश्वासिनां दीप्ता रत्नशिखेव कृष्णफणिनां[24] विद्या जनोद्वेजिनी[25] ॥ ४५ ॥ ग्रीवास्तम्भभृतः[26] परो[27]-न्नतिकथामात्रे शिरःशूलिनः सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः । अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः कष्टा नूनमपण्डितस्य[28] विकृतिर्भीमज्वरारम्भभूः[29][30] ॥ ४६ ॥ मूर्खत्वं सुलभं भजस्व कुमते मूर्खस्य चाष्टौ गुणा निश्चिन्तो बहुभोजनोऽतिमुखरो रात्रिंदिवा

---

१ प्रेतशरीरम्. २ उद्वर्तनं गवगोधूमादिचूर्णेन मलापकर्षणं तेन सुगन्धितम्. ३ निर्जलप्रदेशे. ४ ऋजुतासंपादनाय नम्रीकृतम्. ५ कर्णमन्त्रः. ६ बलात्कारं कृत्वा. ७ ज्ञानलेशशून्यत्वेन विपरीतार्थग्राही. ८ वालुकासु. ९ मरीचिकासु. १० शृङ्गम्. ११ गजः. १२ सगर्वम्. १३ शर्वसबन्धि. १४ मस्तकात्. १५ ददाति. १६ मूर्खे. १७ नाशयति. १८ महान्. १९ बिम्बग्रहणे. २० मृत्पिण्डः. २१ कविश्रेष्ठान्. २२ अयोग्यैः. २३ रोषेण कषायितं ताम्रमुदरं गर्भो यस्यैवंविधा दृग्येषाम्. २४ कृष्णसर्पाणाम्. २५ त्रासदात्री. २६ ग्रीवास्तम्भं धारयतः. २७ परोत्कर्षः. २८ मूर्खस्य. २९ विकारः. ३० दारुणज्वरारम्भकभूमिः.

स्वप्नभाक् । कार्याकार्यविचारणान्धबधिरो मानापमाने समः प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ४७ ॥ व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते छेत्तुं वज्रमणीञ्शिरीषकुसुमप्रान्तेन संनह्यते । माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥ ४८ ॥ शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ४९ ॥ तोयं निर्मथितं घृताय मधुने निष्पीडितः प्रस्तरः पानार्थं मृगतृष्णिकोर्मितरला भूमिः समालोकिता । दुग्धा सेयमचेतनेन जरती दुग्धाशया सूकरी कष्टं यत्खलु दीर्घया धनतृषा नीचो जनः सेवितः ॥ ५० ॥ काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहुर्दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः । कासारेऽपि विकासिपङ्कजचये खेलन्मराले पुनः क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्वेषते ॥ ५१ ॥ विद्ये ह्रीयतरासि किं नु कृपणासंभावनैर्लज्जसे सन्त्यन्ये तव तोषणाहितधियो धन्या वदान्या भुवि । कान्तानां कुचकुम्भकौशलरुचां नो हानिरेतावता षण्ढानां हृदयेऽपि यत्प्रणयते नानङ्गरागोदयः ॥ ५२ ॥ मीमांसा पठिता न यैरुपनिषन्नैव श्रुता तत्त्वतः श्रीमच्छङ्करभाष्यतो भगवती गीताप्यधीता न यैः । सिद्धान्तापगतं शिरोमणिमतं ज्ञात्वापि किंचित्ततो भट्टाचार्यपदं गताः कथमहो लज्जां लभन्ते न ते ॥ ५३ ॥ पेटीचीवरपट्टवस्त्रपटलश्वेतातपत्रच्छटाशाटीहारकघोटकस्फुटघटाटोपाय तुभ्यं नमः । येनानक्षरकुक्षयोऽपि जगतः कुर्वन्ति सर्वज्ञताभ्रान्तिं येन विना तु हास्यपदवीं सन्तोऽपि कष्टं गताः ॥ ५४ ॥ प्रादुष्यात्पण्डितानां कविवचसि कथं प्रत्ननूत्नत्वचिन्ता विद्येरन्यद्यैवद्यान्यभिजहति तथा गृह्णते स्युर्गुणांश्चेत् । अन्यस्त्वन्यप्रमाणः परमवतनुते छिद्यते तावता किं नायं रत्नस्य दोषो दृषदिति यदिदं क्षिप्रमन्धाः क्षिपन्ति ॥ ५५ ॥

## छान्दसप्रशंसा ।

नाध्यापयिष्यन्निर्गमाञ्श्रमेणोपाध्यायलोका यदि शिष्यवर्गान् । निर्वेदवादं किल निर्वितानमुर्वीतलं हन्त तदाभविष्यत् ॥ १ ॥

## छान्दसनिन्दा ।

आः कष्टमप्रहृष्टा शिष्टा अपि वित्तचापलाविष्टाः । अध्यापयन्ति वेदानादाय चिराय मासि मासि भृतिम् ॥ १ ॥

---

१ रोगवर्जितः. २ सर्पम्. ३ बिसम्. ४ हीरकादीन्. ५ सनद्धो भवति. ६ इच्छति. ७ अमृतस्राविभिः. ८ तीक्ष्ण. ९ प्रादुर्भवेत्. १० काव्ये. ११ दोषाः. १२ वेदान्. १३ वेतनम्.

## वैयाकरणप्रशंसा ।

वैयाकरण[1]किरातादपशब्दमृगाः क्व यान्ति [2]संत्रस्ताः । [3]ज्योतिर्[4]नट[5]विटगायक[6]भिषगानन-[7]गह्वराणि यदि न स्युः ॥ १ ॥ यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत् ॥ २ ॥ कृतदुरितनिराकरणं व्याकरणं चतुरधीरधीयानः । बुधगणगणनावसरे कनिष्ठिकायां परं जयति ॥ ३ ॥ [9]सूत्रं [10]पाणिनिबद्धं [11]कलयन्पुरुषः [12]समुद्वहति [13]सुदृशम् । [14]वर्णादीनां धर्मान्[15]बुद्ध्वा [16]विधिवत्[17]प्रयुङ्क्तेऽसौ ॥ ४ ॥ [18]पातं जले [19]विष्णुपदापगायाः [20]पातञ्जले चापि [21]नयेऽ[22]वगाहम् । [23]आचक्षते शुद्धिदमा [24]प्रसूतेरा च [25]क्षिते रागमधोक्षजे च ॥ ५ ॥ नृणाम[26]नभ्यस्तफणाभृदीशगिरां [27]दुरापा [28]बुधराजगोष्ठी । [29]अबुद्धचापश्रुतिपद्धतीनां युद्धक्षमेवोद्धतयोद्धसार्था ॥ ६ ॥ नाङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते । कस्मिंश्चिदुक्ते तु पदे कथंचित्स्वैरं वपुः स्विद्यति वेपते[30] च ॥ ७ ॥ [31]शब्दशास्त्रम[32]नधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे । बन्द्धुमिच्छति वने मदोत्कटं हस्तिनं [33]कमलनालतन्तुना ॥ ८ ॥

---

## वैयाकरणनिन्दा ।

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्... 

चोऽन्त्यादिटि । लोपोव्योर्वलिवृद्धिरेचियचिभंदाधाघ्वदाप्छेचटेरित्य[34]ब्दानखिलान्[35]नयन्ति कतिचिच्छब्दान्पठन्तः [36]कटून् ॥ १ ॥ सूत्रैः पाणिनिनिर्मितैर्बहुतरैर्निष्पाद्य शब्दावलिं [37]वैकुण्ठस्तवमक्षमा रचयितुं मिथ्याश्रमाः शाब्दिकाः । पक्कान्नं विविधं श्रमेण[38] विविधापूपाज्यसूपान्वितं मन्दाग्नीननुरुन्धते मितबलानाघ्रातुमप्यक्षमान् ॥ २ ॥ कुप्वोःᳲकᳲपौचशोषोध्यसखिससजुषोरुर्विरामोऽवसानं शश्छोऽटीत्यादिशब्दैः सदसि यदि [39]शठाः शाब्दिकाः पण्डिताः

---

१ भिल्लाः. २ भीताः. ३ गणकाः. ४ नाट्यकाराः. ५ जाराः. ६ वैद्याः. ७ गुहाः. ८ विष्ठा. ९ व्याकरणसूत्रम्; (पक्षे) कङ्कणम्. १० पाणिनिना बद्धं रचितम्; (पक्षे) पाणौ हस्ते निबद्धम्. विवाहकाले सूत्रनिर्मिते कङ्कणे वधूवरयोर्हस्तयोर्बध्नन्तीति प्रसिद्धिः. ११ अर्थज्ञानपूर्वकं विचारयन्; (पक्षे) धारयन्. १२ सम्यग्धारयति; (पक्षे) सम्यगुद्वहति. पाणिग्रहणपूर्वकं स्वीकरोतीत्यर्थः. १३ शोभनां दृष्टिम्. शुद्धाशुद्धविवेचनशक्तिमित्यर्थः; (पक्षे) शोभना दृग्यस्या एतादृशी स्त्रियम्. १४ अकारप्रभृतिवर्णादीनाम्; (पक्षे) ब्राह्मणवर्णादीनाम्. १५ ज्ञात्वा. १६ यथाशास्त्रम्. १७ प्रयोगं करोति; (पक्षे) योजयति. १८ पतनम्. १९ गङ्गायाः. २० पतञ्जलिनिर्मिते. २१ व्याकरणशास्त्रे. २२ मज्जनम्; (पक्षे) अभ्यासम्. २३ वदन्ति. २४ जननादारम्य. २५ मरणान्तं च. २६ अनधीतमहाभाष्याणाम्. २७ दुष्प्रापा. २८ पण्डितराजसभा. २९ अज्ञातधनुर्वेदमार्गाणाम्. ३० कम्पते. ३१ व्याकरणम्. ३२ अध्ययनमकृत्वा. ३३ बिसतन्तुना. ३४ वर्षाणि. ३५ यापयन्ति. ३६ कर्णकठोरान्. ३७ विष्णुस्तवम्. ३८ कृत्वेति शेषः. ३९ धूर्ताः.

स्युः । तेषां को वापराधः कथयत सततं ये पठन्तीह थो[1]न्तत्ताथय्याथय्यथय्याधिगधिगधि-गधिक्थय्यथय्येति शब्दान् ॥ ३ ॥

---

## नैयायिकप्रशंसा ।

अद्भुतस्तर्क[2]पाथोधिरगाधो यस्य वर्धकः । अक्ष[3]पादोऽतमः[4]स्पृष्टस्त्वकलङ्कः कला[5]निधिः ॥ १ ॥ अपरीक्षितलक्षणप्रमाणैर[6]परामृष्टपदार्थसार्थतत्त्वैः । अवशीकृतजैत्र[7]युक्तिजालैरलमेतैरनधीततर्कविद्यैः ॥ २ ॥ मोहं[8] रुणद्धि[9] विमलीकुरुते च बुद्धिं सूते[10] च संस्कृतपदव्यवहारशक्तिम् । शास्त्रान्तराभ्यसनयोग्यतया युनक्ति[11] तर्कश्रमो न तनुते किमिहोपकारम् ॥ ३ ॥ ज्ञानाब्धिर[12]क्षिचरणः कण[13]भक्षकश्च श्रीपक्षिलोऽप्युदयनः स च वर्धमानः । गङ्गेश्वरः शशधरो बहवश्च नव्या ग्रन्थैर्व्यरुन्ध्यत इमे हृदया[14]न्धकारम् ॥ ४ ॥ प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः सारज्ञस्याप्य[15]परिकलितन्यायशास्त्रस्य पुंसः । वादारम्भे वदितुमनसो वाक्यमेकं सभायां प्रह्वा[16] जिह्वा भवति कियतीं पश्य कष्टामवस्थाम् ॥ ५ ॥

---

## नैयायिकनिन्दा ।

परामृशन्तो लिङ्गानि व्यभिचारविचारकाः । तार्किका यदि विद्वांसो विटैः किमपराध्यते ॥ १ ॥ गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च । अमी समाघ्रातवितर्कवादाः समागताः फूंकटपादमिश्राः ॥ २ ॥ कर्कशतर्कविचारव्यग्रः किं वेत्ति काव्यहृदयानि । ग्राम्य इव कृषिविलग्नश्चञ्चलनयनावचोरहस्यानि ॥ ३ ॥ नैयायिकानां नलिनाम्बराणां जनुर्गतं रासभचिन्तयैव । तथापि वेश्यास्तनसंनिवेशस्तोतुः कवेः कोऽपि विशेष एव ॥ ४ ॥ न जिघ्रत्या[17]म्नायं स्पृशति न त[18]दङ्गान्यपि सकृत्पुराणं नादत्ते न गणयति किं च स्मृतिगणम् । पठञ्[19]शुष्कं तर्कं परपरिभवार्थोक्तिभिरसौ नयत्यायुः सर्वं निहतपरलोकार्थयतनः ॥ ५ ॥ प्रयत्नैर[20]स्तोकैः परिचितकुतर्कप्रकरणाः परं वाचोवश्यान्कतिपयपदौघान्विदधतः । सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्न लज्जन्ते म[21]न्दाः स्वयमपि तु जिह्रेति[22] विबुधः ॥ ६ ॥ [23]कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः । प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छ[24]टाव्याप्तिर्नावति नैव पात्यनुमितिर्नो प-

---

१ गायकानां तालशब्दानुकरणमेतत्. २ तर्कसमुद्रः. ३ गौतमः; (पक्षे) क्षपां ददातीति क्षपादः स न भवतीति तथाविधः. चन्द्र इत्यर्थः. ४ अज्ञानेन; (पक्षे) राहुणा. ५ कलानां निधिः; (पक्षे) चन्द्रः. ६ अज्ञातपदार्थसमूहतत्त्वैः. ७ जययुक्ति. ८ अज्ञानम्. ९ रोधयति. नाशयतीत्यर्थः. १० उत्पादयति. ११ योजयति. १२ गौतम.. १३ कणादः. १४ बुद्धेरज्ञानम्. १५ अनभ्यस्त. १६ वक्रा. १७ वेदम्. १८ वेदाङ्गानि. १९ नीरसम्. २० बहुभिः. २१ मूर्खाः. २२ लज्जां प्राप्नोति. २३ कर्मचिन्तनं ब्रह्मचिन्तन च. २४ परमाणुसमुदायः.

क्षता रक्षति ॥ ७ ॥ हेतुः कोऽपि विशिष्टधीरनुमितौ न ज्ञानयुग्मं मरुत्वाचो नेति च मोघवादमुखरा नैयायिकाश्चेद्बुधाः। मेषस्याण्डमियत्पलं बलिभुजो दन्ताः कियन्तस्तथेत्येवं संततचिन्तनैः श्रमजुषो न स्युः कथं पण्डिताः ॥ ८ ॥ साधु व्याकरणं हिताय विशदं काव्यं पिकीगीतवन्मीमांसा श्रुतितत्परा तदनुगं सांख्यं सपातञ्जलम्। त्वं तु न्यायविशुद्ध-वैदिकविधिव्याकोपबौद्धागमव्याघाताय निगूढतर्कगहन क्वामोदमाधास्यसि ॥ ९ ॥ हे हे मित्र जिता मयातिबलिनो विप्रा धनं चार्जितं शेषेभ्यः शरयन्त्रदानमपि सत्संपादितं भूरिशः। ग्रन्थाश्चापि कृताः सुतर्कघटकाः शास्त्राणि संदूष्य वै सोऽहं तर्कविभूषणोऽत्र गहने धात्रा शृगालः कृतः ॥ १० ॥

---

## मीमांसकप्रशंसा।

भगवदनभ्युपगमनं दैवतचैतन्यनिह्नवश्चैषाम्। कर्मश्रद्धावर्धकतत्प्राधान्यप्रदर्शनायैव ॥ १ ॥ आगमरूपविचारिण्यधिकरणसहस्रशिक्षितविपक्षे। स्वामिनि जैमिनियोगिन्युपरज्यति हृदय-मस्मदीयमिदम् ॥ २ ॥ शबरकुमारिलगुरवो मण्डनभवदेवपार्थसारथयः। अन्ये च विश्वमान्या जयन्ति संत्रायमाणतन्त्रास्ते ॥ ३ ॥ नैयायिका वा ननु शाब्दिका वा त्रयीशिरःसु श्रम-शालिनो वा। वादाहवे बिभ्रति जैमिनीयन्यायोपरोधे सति मौनमुद्राम् ॥ ४ ॥ आदौ धर्मे प्रमाणं विविधविधिभिदाशेषतां च प्रयुक्तिं पौर्वापर्याधिकारौ तदनु बहुविधं चातिदेशं तथो-हम्। बाधं तन्त्रं प्रसङ्गं नयमनयशतैः सम्यगालोचयद्भ्यो भिन्ना मीमांसकेभ्यो विदधति भुवि के सादरं वेदरक्षाम् ॥ ५ ॥

---

## मीमांसकनिन्दा।

ते मीमांसाशास्त्रलोकप्रसिद्धाः सर्वेषीणां सेहिरे नैव सत्ताम्। चैतन्यस्यापह्नवं देवतानां चक्रुर्विश्वं नश्वरं मन्यमानाः ॥ १ ॥ मीमांसकाः कतिचिदत्र मिलन्ति वेदप्रामाण्यसाधन-कृतोऽपि न तेऽभिवन्द्याः। उद्घोषितोऽप्युपनिषद्भिरशेषशेषी[11] ब्रह्मैव नाभ्युपगतः पुरुषो-त्तमो यैः ॥ २ ॥

---

## वैद्यप्रशंसा।

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु। गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ रागादिरोगान्सततानुषक्तानशेषकायप्रसृतानशे-

---

१ व्याप्तिविशिष्टपक्षधर्मताज्ञानविशिष्टः. २ पूर्वोक्तगतांशद्वयम्. ३ त्वगिन्द्रियप्रत्यक्षः. ४ जलपाकाः. ५ काकाः. ६ लोपम्. ७ शास्त्रदीपिकाकर्ता पार्थसारथिपण्डितः. ८ वेदत्रयी. ९ वादयुद्धे. १० न्यायरूपे प्रतिबन्धके. ११ प्रतीतपदार्थैः सहाविचाल्यः. १२ अमृतं पाणौ यस्य सः. अमृतवदवश्यमारोग्यद इत्यर्थः.

षान् । औत्सुक्यमोहारतिदाहघान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥ २ ॥ अन्यानि शास्त्राणि विनोदमात्रं प्राप्तेषु वा तेषु न तैश्च किंचित् । चिकित्सितज्योतिषमन्त्रवादाः पदे पदे प्रत्ययमावहन्ति ॥ ३ ॥ माबोधि वैद्यकमथापि महामयेषु प्राप्तेषु यो भिषगिति प्रथितस्तमेव । ओंकारयत्यखिल एव विशेषदर्शी लोकोऽपि तेन भिषगेष न दूषणीयः ॥ ४ ॥ मस्ते दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं तप्तायां ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे । दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥ ५ ॥ भ्रान्ता वेदान्तिनः किं पठथ शठतयाद्यापि चाद्वैतविद्यां पृथ्वीतत्त्वे लुठन्तो विमृशथ सततं कर्कशास्तार्किकाः किम् । वेदैर्नानागमैः किं ग्लपयथ हृदयं श्रोत्रियाः श्रोत्रशूलैर्वैद्यं सर्वानवद्यं विचिनुत शरणं प्राणसंप्रीणनाय ॥ ६ ॥

## कुवैद्यनिन्दा ।

वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ १ ॥ वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव । त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ २ ॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ३ ॥ कषायैरुपवासैश्च कृतामुल्लाघतां नृणाम् । निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ४ ॥ अज्ञातशास्त्रसद्भावाञ्शास्त्रमात्रपरायणान् । त्यजेद्दूराद्भिषक्पाशान्पाशान्वैवस्वतानिव ॥ ५ ॥ मिथ्यौषधैर्हन्त मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः । वैद्या इमे वञ्चितरुग्णवर्गाः पिचण्डभाण्डं परिपूरयन्ति ॥ ६ ॥ नटोऽपि दद्याद्गणकोऽपि दद्यात्संप्रार्थितः पाशुपतोऽपि दद्यात् । वैद्यः कथं दास्यति याचमानो यो मर्तुकामादपि हर्तुकामः ॥ ७ ॥ न धातोर्विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः । तथाप्येते वैद्या इति तरलयन्तो जडजनानसून्मृत्योर्भृत्या इव वसु हरन्ते गदजुषाम् ॥ ८ ॥ सत्कोणं लोलनेत्रं कुलयुवतिमुखं दृश्यते सानुकम्पं रण्डानामर्धलज्जाञ्चितमधिपुलकं स्पृश्यते पीनमङ्गम् । क्लीबानां खाद्यतेऽन्तश्चिरनिहितधनं काष्ठमूलाग्नितोयैः पूर्वा सिद्धा कलानां सकलगुणनिधिर्वैद्यविद्याभिवन्द्या ॥ ९ ॥

## गणकप्रशंसा ।

चतुरङ्गबलो राजा जगतीं वशमानयेत् । अहं पञ्चाङ्गबलवानाकाशं वशमानये ॥ १ ॥

---

१ अविचार्यकार्यप्रवृत्तिः. २ विचाराशक्ति. ३ असंतोषः. ४ आह्वयति. ५ मस्तके. ६ म्लाने. ७ इन्द्रियसमूहे. ८ खिन्ने. ९ वेदाध्यायिनः. १० कर्णकटुभिः. ११ सर्वेषां मध्ये निर्दोषम्. १२ नीरोगताम्. १३ वास्तवानर्थान्. १४ कुत्सिता भिषजो भिषक्पाशास्तान्. १५ यमसबन्धिनः. १६ रोगिसमूहः. १७ उदरभाण्डम् १८ पारदादेः. १९ भ्रामयन्त. २० प्राणान्. २१ यमस्य. २२ द्रव्यम्. २३ रोगिणाम्.

एकासनस्था जलवायुभक्षा [1]मुमुक्षवस्[2]त्यक्तपरिग्रहाश्च । पृच्छन्ति तेऽ[3]प्यम्बरचारिचारं दैवज्ञमन्ये किमुतार्थचित्ताः ॥ २ ॥ न दैवं न पित्र्यं च कर्मावसिद्ध्येन्न यत्रास्ति देशे ननु ज्योतिषज्ञः । न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥ ३ ॥ दूतो न संचरति खे न चलेच्च वार्ता पूर्वं न जल्पितमिदं न च संगमोऽस्ति । व्योम्नि स्थितं रविशशिग्रहणं प्रशस्तं जानाति यो द्विजवरः स कथं न विद्वान् ॥ ४ ॥ [4]वृद्धिह्रासौ [5]कुमुदसुहृदः [6]पुष्पवन्तो [7]परागः शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः । आविष्कुर्वन्त्यखिलवचनेष्वत्र [8]कुम्भीपुलाकन्यायाज्ज्योतिर्नयगतिविदां निश्चलं मानभावम् ॥ ५ ॥ भानोः शीतकरस्य वापि [9]भुजगग्रासे पुरो निश्चिते तीर्थानामटनं जनस्य घटते तापत्रयोच्चाटनम् । इष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवेद्दृष्टे तु [10]व्यसनेऽत्र तत्[11]परिहृतिः कर्तुं जपाद्यैः क्षमा ॥ ६ ॥

## कुगणकनिन्दा ।

गणिकागणकौ समानधर्मौ निजपञ्चाङ्गनिदर्शकावुभौ । जनमानसमोहकारिणौ तौ विधिना वित्तहरौ विनिर्मितौ ॥ १ ॥ असुखमथ सुखं वा कर्मणां [12]पक्तिवेलास्विह नियतमेते भुञ्जते देहभाजः । तदिह पुरत एव प्राह मौहूर्तिकश्चेत्कथय फलममीषामन्ततः किं ततः स्यात् ॥ २ ॥ विलिखति सदसद्वा जन्मपत्रं जनानां फलति यदि तदानीं दर्शयत्या[13]त्मदाक्ष्यम् । न फलति यदि लग्नद्रष्टुरेवाह मोहं हरति धनमिहैवं हन्त [14]दैवज्ञपाशः ॥ ३ ॥ [15]प्रमोदे खेदे वाप्युपनमति पुंसो विधिवशान्मयैवं प्रागेवाभिहितमिति मिथ्या कथयति । जनानिष्टानिष्टाकलनपरिहारैकनिरतानसौ मेषादीनां परिगणनयैव [16]भ्रमयति ॥ ४ ॥ ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गापवादात्मभिः कल्लोलैर्निबिडे कणान्कतिपयाँल्लब्ध्वा कृतार्था इव । दीर्घायुःसुतसंपदादिकथनै[17]र्दैवज्ञपाशा इमे गेहं गेहमनुप्रविश्य धनिनां मोहं मुहुः कुर्वते ॥ ५ ॥

## पौराणिकनिन्दा ।

पौराणिकानां व्यभिचारदोषो नाशङ्कनीयः कृतिभिः कदाचित् । पुराणकर्ता व्यभिचारजातस्तस्यापि पुत्रो व्यभिचारजातः ॥ १ ॥

## पुरोहितनिन्दा ।

पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च । आद्याक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम् ॥१॥

---

१ मोक्षेच्छवः. २ त्यक्तः परिग्रहः कलत्रं यैस्ते. ३ आकाशसंचारिग्रहगतिम्. ४ क्षयवृद्धी. ५ चन्द्रस्य. ६ सूर्याचन्द्रमसोः. ७ ग्रहणम्. ८ स्थालीपुलाकन्यायेन. ९ ग्रहणे. १० दुःखे. ११ परिहारः. १२ परिपाककालेषु. १३ स्वचातुर्यम्. १४ कुदैवज्ञः. १५ हर्षे. १६ भ्रमं करोति. १७ कुदैवज्ञाः

## कायस्थनिन्दा ।

काकाल्लौल्यं यमात्क्रौर्यं स्थपतेर्दृढघातिताम् । आद्याक्षराणि संयोज्य कायस्थो निर्मितः पुरा ॥ १ ॥ कायस्थेनोदरस्थेन मातुर्मांसं न भक्षितम् । मा जानीहि दयालुत्वं तत्र हेतुरदन्तता ॥ २ ॥

---

## सज्जनप्रशंसा ।

अहो किमपि चित्राणि चरित्राणि महात्मनाम् । लक्ष्मीं तृणाय मन्यन्ते तद्भारेण[1] नमन्त्यपि ॥ १ ॥ नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः[2] । येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ २ ॥ अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् । अहो सुमनसां वृत्तिर्वामदक्षिणयोः समा ॥ ३ ॥ वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ४ ॥ गवादीनां पयोऽन्येद्युः[3] सद्यो वा जायते दधि । क्षीरोदधेस्तु नाद्यापि महतां विकृतिः[4] कुतः ॥ ५ ॥ गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा । पापं तापं च दैन्यं च हन्ति सन्तो महाशयाः ॥ ६ ॥ छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः । मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ ७ ॥ संपदो महतामेव महतामेव चापदः । वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥ ८ ॥ अपकुर्वन्नपि प्रायः प्राप्नोति महतः फलम् । और्वं दहन्तमेवाग्निं संतर्पयति सागरः ॥ ९ ॥ महतां प्रार्थनेनैव विपत्तिरपि शोभते । दन्तभङ्गो हि नागानां श्लाघ्यो[5] गिरिविदारणे[6] ॥ १० ॥ गुणग्रामाविसंवादि नामापि हि महात्मनाम् । यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ ११ ॥ वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् । कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥ १२ ॥ नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः ॥ १३ ॥ महात्मानोऽनुगृह्णन्ति भजमामान्रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १४ ॥ सुखेन नोद्गिरत्यूर्ध्वं हृदयेन न यात्यधः । जरयत्यन्तरे[7] साधुर्दोषं विषमिवेश्वरः ॥१५॥ विक्रतिं नैव गच्छन्ति सङ्गदोषेण साधवः । आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥ १६ ॥ मान्या एव हि मान्यानां मानं कुर्वन्ति नेतरे । शंभुर्बिभर्ति मूर्ध्नेन्दुं स्वर्भानुस्[8]तं जिघृक्षति[9] ॥ १७ ॥ सुजनं व्यजनं मन्ये चारुवंशसमुद्भवम्[10] । आत्मानं च परिभ्राम्य परतापनिवारणम् ॥ १८ ॥ उदये सविता रक्तो रक्तश्चास्तमये तथा । संपत्तौ च विपत्तौ च महतामेकरूपता ॥ १९ ॥ आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ २० ॥ सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् । असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ २१ ॥ हरेः[11] पदाहतिः[12] श्लाघ्या न श्लाघ्यं खररोहणम् । स्पर्धापि विदुषा युक्ता

---

१ लक्ष्मीभारेण. २ उदारचेतसः. ३ अन्यस्मिन्दिवसे. ४ विकारः. ५ स्तुत्यः. ६ पर्वतभेदने. ७ जीर्ण करोति. ८ राहुः. ९ ग्रहीतुमिच्छति. १० वेणुः; (पक्षे) कुलम्. ११ सिंहस्य. १२ पादताडनम्.

न युक्ता मूर्खमित्रता ॥ २२ ॥ साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम्[1]। नहि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥२३॥ नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः। अन्ये बदरिकाकारा बहिरेव मनोहराः ॥२४॥ स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम्। भङ्गेनापि मृणालानामनुबध्नन्ति[2] तन्तवः ॥ २५ ॥ परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्। धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥२६॥ संपत्सु महतां चित्तं भवत्युत्पलकोमलम्। आपत्सु च महाशैलशिलासंघातकर्कशम्[3] ॥२७॥ पतति व्यसने दैवाद्दारुणे दारुणात्मनि। संवर्मयति वज्रेण धैर्येण महतां मनः ॥२८॥ सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम्। आमोदो नहि कस्तूर्याः शपथेन विभाव्यते ॥२९॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः। प्रायेण साधुवृत्तानामस्थायिन्यो[4] विपत्तयः ॥ ३० ॥ सकृत्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि। तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥३१॥ दन्तिदन्तसमानं हि निःसृतं महतां वचः। कूर्मग्रीवेन नीचानां पुनरायाति याति च ॥३२॥ श्लोकस्तु श्लोकतां याति यत्र तिष्ठन्ति साधवः। लंकारो[5] लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः ॥ ३३ ॥ किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः। नहि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ३४ ॥ काकैः सह प्रवृद्धस्य कोकिलस्य कला[6] गिरः। खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ३५ ॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः। चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ ३६ ॥ विवेकः सह संयत्या विनयो विद्यया सह। प्रभुत्वं प्रश्रयोपेतं[7] चिह्नमेतन्महात्मनाम् ॥ ३७ ॥ उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्[8]। सुजनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः॥३८॥ निर्गुणेष्वपि सत्त्वेषु[9] दयां कुर्वन्ति साधवः। नहि संहरते ज्योत्स्नां[10] चन्द्रश्चाण्डालवेश्मनि[11] ॥ ३९ ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः। अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ४० ॥ हृदयानि सतामेव कठिनानीति मे मतिः। खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः[12] ॥ ४१ ॥ अपेक्षन्ते न च स्नेहं[13] न पात्रं[14] न देशान्तरम्[15]। सदालोकहि[16]तासक्ता रत्नदीपा इवोत्तमाः ॥ ४२ ॥ ब्रूतेऽन्यस्यासतोऽप्यार्यो गुणान्दोषांश्च दुर्जनः। तुल्येऽप्यसत्त्वे किं त्वेको गच्छेदूर्ध्वमधोऽपरः ॥ ४३ ॥ सन्तो मनसि कृत्वैव प्रवृत्ताः कृत्यवस्तुनि। कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ॥ ४४ ॥ आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः। परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥ ४५ ॥ सन्त एव सतां नित्यमापदुद्धरणक्षमाः। गजानां पङ्कमग्नानां गजा एव धुरंधराः ॥ ४६ ॥ नूनं दुग्धाब्धिमन्थोत्थाविमौ सुजनदुर्जनौ। किं त्विन्दोः सोदरः पूर्वः कालकूटस्य चेतरः ॥ ४७ ॥

---

१ विकारम्. २ संबन्धं कुर्वन्ति. ३ कठिनम्. ४ क्षणिकाः. ५ लकारलोपाच्छोक एवावतिष्ठते. ६ अव्यक्तमधुराः. ७ विनयः. ८ निष्कपटम्. ९ प्राणिषु. १० चन्द्रकान्तिम्. ११ चाण्डालगृहे. १२ किंचिदपि. १३ मैत्रीम्; (पक्षे) घृतादिम्. १४ योग्यताम्; (पक्षे) भाण्डम्. १५ अवस्थान्तरम्; (पक्षे) सूत्रवर्तिम्. १६ लोकानां हितं तस्मिन्नासक्ताः; (पक्षे) आलोकः प्रकाशस्तदेव हितं तस्मिन्नासक्ताः.

गोत्रस्थितिं न मुञ्चन्ति सदा सैन्नतिमाश्रिताः । उदन्वन्तश्च सन्तश्च महासत्त्वतया तथा ॥ ४८ ॥ विगृहीतः पदाक्रान्तो भूयोभूयश्च खण्डितः । माधुर्यमेवावहति सुश्लोक इव सज्जनः ॥ ४९ ॥ प्रकृतिप्रत्ययोपेतः सद्वृत्तः साधुसंमतः । अर्थार्पणसमर्थश्च सुश्लोक इव सज्जनः ॥ ५० ॥ गुणोऽपि नूनं दोषाय दुषिधातोः खलस्य च । सन्मार्गसिद्धये वृद्धिर्मृजेः साधुजनस्य च ॥ ५१ ॥ मुञ्चन्तश्चापलरसं प्रस्थिताः पावने पथि । घना इवार्द्रहृदयाः सन्तो जीवनहेतवः ॥ ५२ ॥ धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमत्तास्ते महामहिमशालिनः ॥ ५३ ॥ साधुरेव प्रवीणः स्यात्सद्गुणामृतचर्वणे । नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥ ५४ ॥ उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः । मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥ ५५ ॥ सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् । पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ ५६ ॥ स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् । न त्यजन्ति रुतं मञ्जु काकसंपर्कतः पिकाः ॥ ५७ ॥ संपत्तौ कोमलं चित्तं साधोरापदि कर्कशम् । सुकुमारं मधौ पत्रं तरोः स्यात्कठिनं शुचौ ॥ ५८ ॥ स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् । कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥५९॥ अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् । विधोर्विधुंतुदास्कन्दविपत्कालोऽपि सुन्दरः ॥ ६० ॥ विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः । स्ववर्मबन्धान्नो शुद्धिर्ज्ञायते कर्षणं विना ॥ ६१ ॥ दृष्टदुर्जनदौरात्म्यः सज्जने रज्यते जनः । आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥ ६२ ॥ क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः । संत्यज्याम्भोजकिञ्जल्कं न प्रार्थयति शैवलम् ॥ ६३ ॥ उत्तमं सुचिरं नैव विपदोऽभिभवन्त्यलम् । राहुग्रसनसंभूतक्षणो विच्छाययेद्विधुम् ॥ ६४ ॥ प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम् । चण्डाश्चण्डातपात्पादा हिमांशोरमृतसृजः ॥ ६५ ॥ तुल्यं परोपतापित्वं क्रुद्धयोः साधुनीचयोः । न दाहे ज्वलतोर्भिन्नं चन्दनेन्धनयोः क्वचित् ॥ ६६ ॥ महतां तादृशं तेजो यत्र शाम्यन्त्यनौजसः । अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ६७ ॥ आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु । व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ ६८ ॥ आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु । अगुरोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य ॥ ६९ ॥ शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः । विवराणि मुद्रयन्द्रागूर्णायुरिव सज्जनो जयति ॥ ७० ॥ तरुमूलादिषु निहितं जलमाविर्भवति पल्लवाग्रेषु । निभृतं यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥ ७१ ॥ संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ७२ ॥ दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं वदत्यार्यः । अगुरुरपि दह्यमानः स्वभावगन्धं परित्यजति किं नु ॥ ७३ ॥ अप्रियवचनदरिद्रैः

१ कुलमर्यादाम्; (पक्षे) पर्वतस्थितिम्. २ सन्नमनम्. ३ समुद्राः. ४ प्राणिनः, (पक्षे) धैर्यम्. ५ व्यक्ता भवति. ६ लूता. ७ एकान्ते. ८ श्रेष्ठम्. ९ अनिष्टम्.

प्रियवचनाढ्यैः स्वदारपरितुष्टैः। परपरिवाद[1]निवृत्तैः क्वचित्क्वचिन्मण्डिता[2] वसुधा ॥ ७४ ॥ पतितोऽपि राहुवदने तरणि[3]र्बोधयति[4] पद्मखण्डानि। भवति विपद्य[5]पि महतामङ्गीकृतवस्तुनिर्वाहः ॥ ७५ ॥ छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके। इति विमृशन्तः सन्तः संतप्यन्ते न ते विपदा ॥ ७६ ॥ वासरगम्यमनूरो[6]रम्बरमवनी च वामनैकपदा। जलधिरपि पोत[7]लङ्घ्यः सतां मनः केन तुलयामः ॥ ७७ ॥ गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम्। जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति ॥ ७८ ॥ निजपद[8]गतिगुणरञ्जितजगतां करिणां च सत्कवीनां च। वहतामपि महिमानं[9] शोभायै सज्जना[10] एव ॥ ७९ ॥ बाणं[11] हरिरिव कुरुते सुजनो बहुदोष[12]मप्यदोष[13]मिव। यावद्दोषं[14] जाग्रति[15] मलिम्लुचा[16] इव पुनः पिशुनाः॥८०॥ महतोः[17] सुवृत्तयोः[18] सखि हृदयग्रहयोग्ययोः[19] समस्थितयोः। सज्जनयोः स्तनयोरपि निरन्तरं संगतं भवति ॥ ८१ ॥ महतोऽपि[20] हि विश्वासान्महाशया[21] दधति नाल्पमपि लघुभिः[22]। संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि ॥ ८२ ॥ वैगुण्येऽपि हि महतां विनिर्मितं भवति कर्म शोभायै। दुर्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यम् ॥ ८३ ॥ सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा। न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः ॥ ८४ ॥ भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य। वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥ ८५ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः। करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ ८६ ॥ उपकारमेव तनुते विपद्गतः सद्गुणो महताम्। मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ ८७ ॥ गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम्। तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ ८८ ॥ अनवरतपरोपकरणव्यग्रीभवदमलचेतसां महताम्। आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥ ८९ ॥ न भवति भवति च न चिरं भवति चिरं चेत्फले विसंवादी। कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ९० ॥ इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः। तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ ९१ ॥ परिचरितव्याः[23] सन्तो यद्यपि कथयन्ति नो सदुपदेशम्। यास्तेषां स्वैरकथा[24]स्ता एव भवन्ति शास्त्राणि ॥ ९२ ॥ सुजनो न याति विकृतिं परहितनिरतो विनाशकालेऽपि। छेदेऽपि चन्दनतरुः सुरभयति[25] मुखं कुठारस्य[26]॥९३॥

---

१ दूषणम्. २ शोभिता. ३ सूर्यः. ४ विकासयति. ५ संकटकाले. ६ अरुणस्य. ७ नौका. ८ चरणाः; (पक्षे) सुप्तिङन्तज्ञानम्. ९ महत्परिमाणम्; (पक्षे) प्रतिष्ठाम्. १० सत्पुरुषाः; (पक्षे) गजानां सज्जीकरणम्. ११ बाणासुरम्. १२ गुणभिन्नो दोष; (पक्षे) बहुतरबाहुशालिनम्. १३ दोषशून्यम्; (पक्षे) बाहुरहितम्. १४ समग्रदोषम्; (पक्षे) यावद्रात्रिम्. १५ तद्विषयकगवेषणावन्तो भवन्ति; (पक्षे) निद्राभाववन्तो भवन्ति. १६ तस्कराः. १७ श्रेष्ठयोः; (पक्षे) महापरिमाणशालिनोः. १८ सुचरितयोः; (पक्षे) सुवर्तुलयोः. १९ आलिङ्गनयोग्ययोः. (पक्षे) वक्षःस्थितिशालिनोः. २० श्रेष्ठानपि; (पक्षे) महापरिमाणानपि. २१ श्रेष्ठाः; (पक्षे) गभीराः. २२ नीचाः; (पक्षे) स्वल्पपरिमाणशालिनः. २३ सेव्याः. २४ स्वैरालापाः. २५ सुगन्धयति. २६ परशोः.

अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः। हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥ ९४ ॥ अनुकुरुतः[1] खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः। विदधाति[2] रन्ध्रमेको गुणवान[3]न्यस्तु पिद[4]धाति ॥ ९५ ॥ आस्तामन्यत्सुजनाः परोपकारैककरणदुर्ललिताः। संतापितपिशुनेषु स्वगुणेष्वपि हन्त खिद्यन्ते ॥ ९६ ॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निः[5]स्वनो मेघः। नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ९७ ॥ यदमी दशन्ति दशना रसना तत्स्वादुसौख्यमनुभवति। प्रकृतिरियं विमलानां क्लिश्यन्ति यदन्यकार्येषु ॥ ९८ ॥ तदपकृतं विधिनार्थिषु यत्सन्तः स्वल्पसंपदो विहिताः। तुच्छे पयसि घनानां सीदत्यति जीवलोकोऽयम् ॥ ९९ ॥ अमृतं कि[6]रति हिमांशुर्विषमेव फणी समुद्गिरति। गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ १०० ॥ गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति। स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ १०१ ॥ उत्कर्षवान्निजगु[7]णो यथा यथा याति क[8]र्णमन्यस्य। धनुरिव सुवंश[9]जन्मा तथा तथा सज्जनो नमति ॥ १०२ ॥ दुर्जनवदनविनिर्गतवचनभुजंगेन सज्जनो दष्टः। तद्विषनाशनिमित्तं साधुः संतोषमौषधं पिबति ॥ १०३ ॥ कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम्। प्रतिपन्नममलमनसां न चलति पुंसां युगान्तेऽपि ॥ १०४ ॥ अन्तःकटुरपि लघुरपि सद्वृत्तं यः पुमान्न संत्यजति। स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥ १०५ ॥ अद्यापि दुर्निवारं स्तु[10]तिकन्या भजति कौमा[11]रम्। सद्भ्यो न रोचते सासन्तोऽप्यस्यै न रोचन्ते ॥ १०६ ॥ मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः। पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥ १०७ ॥ पेश[12]लमपि खलवचनं दहतितरां मानसं सुतत्त्वविदाम्। परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ १०८ ॥ भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे। चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ १०९ ॥ उपरि क[13]रवालधाराकाराः क्रूरा भुजंगमपुंगवाः। अन्तः साक्षाद्द्राक्षादीक्षागुरवो जयन्ति केऽपि जनाः ॥ ११० ॥ स्वस्थानादपि विचलति मज्जति जलधौ च नीचमपि भजते। निजपक्षरक्षणमनाः सुजनो मैनाकशैल इव ॥ १११ ॥ दुर्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति। प्रतिपर्व तपनवासी निःसृतमात्रः शशी शितः ॥ ११२ ॥ विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः। क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ॥ ११३ ॥ खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते। एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥ ११४ ॥ न विमोचयितुं शक्यः क्षमां महान्मोचितो यदि कथंचित्। मन्दरगिरिरिव हि तलं निवर्तते न तु स समवाप्य ॥ ११५ ॥ स्वाधीनैव समृद्धिर्जनोपजीव्यत्वमुच्छ्रूयश्छाया। सत्पुंसो मरुभूरिव जीवनमात्रं समाशास्यम्

---

१ अनुकरणं कुरुतः. २ करोति. ३ सूत्रयुक्तः; (पक्षे) विद्याविनयादिगुणयुक्तः. ४ आच्छादयति; ५ शब्दरहितः. ६ वर्षति. ७ रज्जुः; (पक्षे) विनयादिः. ८ कर्णप्रदेशे; (पक्षे) श्रुतिगोचरताम्. ९ वेणुः; (पक्षे) कुलम्. १० स्तुतिरेव कन्या. ११ कुमारिकात्वम्. १२ कोमलम्. १३ खड्गम्.

॥ ११६ ॥ सर्वस्य सर्वदापि स्पर्शनयोगेन तापमपनेतुम् । सुजनस्य व्यजनस्य च शक्तिम-संगृह्णतः पश्य ॥ ११७ ॥ किं मधुना किं विधुना किं [1]सुधया किं च वसुधयाखिलया । यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयो[2]रयनम् ॥ ११८ ॥ किमपेक्ष्य फलं पयोध-[3]रान्ध्वनतः प्रार्थयते मृगाधिपः । [4]प्रकृतिः खलु सा महीयसः सहते नान्य[5]समुन्नतिं यया ॥ ११९ ॥ सावलेपमुपलिप्सिते [6]परैरभ्युपैति विकृतिं रजस्यपि । अर्थितस्तु न महान्स-मीहते जीवितं किमु धनं धनायितुम् ॥ १२० ॥ वचनैरसतां महीयसो न खलु व्येति गुरु-त्वमुद्धतैः । किमपैति [7]रजोभिरौर्वरै[8]रवकीर्णस्य मणेर्महार्घता ॥ १२१ ॥ प्रकटान्यपि [9]नैपुणं महत्[10]परवाच्यानि चिराय गोपितुम् । विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥ १२२ ॥ किमिवाखिललोककीर्तितं कथयत्यात्मगुणं महामनाः । [11]वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ १२३ ॥ विसृजन्त्य[12]विकत्थिनः परे विषमा[13]शीविषवन्नराः क्रुधम् । दधतोऽन्[14]तरसाररूपतां ध्वनिसाराः पटहा इवेतरे ॥ १२४ ॥ जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः । विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह कैर्विरुध्यते ॥ १२५ ॥ इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता । उपकृत्य भवन्ति दूरतः परतः प्रत्युप-कारशङ्कया ॥ १२६ ॥ आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने । छेदतापन-निघर्षताडनैर्न[15]न्यभावमुपयाति [16]काञ्चनम् ॥ १२७ ॥ चातकस्त्रिचतुरान्पयःकणान्याचते जल-धरं पिपासया । सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ १२८ ॥ दोष-जातमवधीर्य मानसे धारयन्ति गुणमेव सज्जनाः । क्षारभावमपनीय गृह्णते वारिधेः सलिल-मेव वारिदाः ॥ १२९ ॥ सज्जनस्य हृदयं नवनीतं यद्वदन्ति कवयस्तदलीकम् । अन्यदेह-विलसत्परितापात्सज्जनो द्रवति नो नवनीतम् ॥ १३० ॥ तुङ्गात्मनां तुङ्गतराः समर्था मनो-रथान्पूरयितुं न नीचाः । धाराधरा एव धराधराणां निदाघदाहं [17]शमितुं न नद्यः ॥ १३१ ॥ प्रकाममभ्यस्यतु नाम विद्या सौजन्यमभ्यासवशादलभ्यम् । कर्णौ सपत्न्यः प्रविशालयेयु-र्विशालयेदक्षियुगं न कोऽपि ॥ १३२ ॥ सन्तोऽपि सन्तः क्व किरन्तु तेजः क्व नु ज्वलन्तु क्व ननु प्रथन्ताम् । विधाय रुद्धा न तु वेधसैव ब्रह्माण्डकोणे घटदीपकल्पाः ॥ १३३ ॥ प्रसादमाधुर्यगुणोपपन्ना यत्नादनौचित्यपराङ्मुखाणाम् । अर्थाः कवीनामिव सज्जनानां सर्वस्य सर्वावसरोपयोगाः ॥ १३४ ॥ वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति । एवं कुलीना व्यसनाभिभूता न नीचकर्माणि समाचरन्ति ॥ १३५ ॥ अहो महत्त्वं महता-म[19]पूर्वं विपत्तिकालेऽपि परोपकारः । यथा[20]स्यमध्ये पतितोऽपि राहोः कलानिधिः पुण्य[21]चयं

१ अमृतेन. २ स्थानम्. ३ शब्दान्कुर्वतः. ४ स्वभावः. ५ उत्कर्षम्. ६ निष्ठुरैः. ७ भौमैः. ८ छन्नस्य. ९ कौशलम्. १० परदूषणानि. ११ वक्ता. १२ अनात्मश्लाघिनः. १३ क्रूरसर्पवत्. १४ अभ्यन्तरे. १५ विकृतिम्. १६ सुवर्णम्. १७ शमयितुम्. १८ सकटव्याप्ताः. १९ अलौकिकम्. २० मुखमध्ये. २१ वृद्धिम्.

ददाति ॥ १३६ ॥ पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः । नादन्ति सस्यं[1] खलु वारिवाहाः[2] परोपकाराय सतां विभूतयः[3] ॥ १३७ ॥ रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ १३८ ॥ श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः । यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गाद्विमुखाः प्रयान्ति ॥ १३९ ॥ सन्तस्तृणोत्सारणमुत्तमाङ्गात्सुवर्णकोट्यर्पणमामनन्ति । प्राणव्यये वापि कृतोपकाराः खलाः परे वैरमिहोद्वहन्ति ॥ १४० ॥ कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव । मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ १४१ ॥ क्षारं जलं वारिमुचः पिबन्ति तदेव कृत्वा मधुरं वमन्ति । सन्तस्तथा दुर्जनदुर्वचांसि पीत्वा च सूक्तानि समुद्गिरन्ति ॥ १४२ ॥ अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् । सुधांशुरेशः स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥ १४३ ॥ कर्णेजपानां वचनप्रपञ्चान्महात्मनः क्वापि न दूषयन्ति । भुजंगमानां गरलप्रसङ्गान्नापेयतां यान्ति महासरांसि ॥ १४४ ॥ अपांनिधिं वारिभिरर्चयन्ति दीपेन सूर्यं प्रतिबोधयन्ति । ताभ्यां तयोः किं परिपूर्णता स्याद्भक्त्या हि तुष्यन्ति महानुभावाः ॥ १४५ ॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय । परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः[5] स एव ॥ १४६ ॥ न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः । द्वेष्यैव केषामपि चन्द्रखण्डविपाण्डुरा पुण्ड्रकशर्करापि ॥ १४७ ॥ किं चन्द्रमाः प्रत्युपकारलिप्सया करोति गोभिः कुमुदावबोधनम् । स्वभाव एवोन्नतचेतसां सतां परोपकारव्यसनं हि जीवितम् ॥ १४८ ॥ विपदि[6] धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता[7] युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुते[9] प्रकृतिसिद्धमिदं[8] हि महात्मनाम् ॥ १४९ ॥ अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् । अपि च मानसमम्बुनिधिर्यशो विमलशारदपार्वणचन्द्रिका ॥ १५० ॥ यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः । लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ १५१ ॥ आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥ १५२ ॥ यः प्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ १५३ ॥ प्रेमैव मास्तु यदि चेत्पथिकेन[10] सार्धं तेनापि चेद्गुणवता न समं[11] कदाचित् । तेनापि चेद्भवतु मास्तु कदापि भङ्गो[12] भङ्गोऽपि चेद्भवतु वश्यमवश्यमायुः

---

१ धान्यम्. २ मेघाः. ३ ऐश्वर्याणि. ४ शिरसः. ५ त्रिलोक्यां तिलको भूषणभूतः. ६ उदयकाले. ७ वक्तृत्वशक्तिः. ८ स्वभावसिद्धम्. ९ शास्त्रे. १० पान्थेन सार्धं मास्तु. ११ सह. १२ विघातः.

॥ १९४ ॥ चन्द्रः क्षयी प्रकृतिवक्रतनुर्जडात्मा दोषाकरः स्फुरति मित्रविपत्तिकाले । मूर्ध्ना तथापि विधृतः परमेश्वरेण नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १९५ ॥ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोऽपि । चन्द्रस्तथापि हरवल्लभतामुपैति नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १९६ ॥ लज्जागुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृदयामनुवर्तमानाम् । तेजस्विनः सुखमसूनपि संत्यजन्ति सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ १९७ ॥ सत्पूरुषः खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव । आराधितः कथय केन करैरुदारैरिन्दुर्विकासयति कैरविणीकुलानि ॥ १९८ ॥ दाता न दापयति दापयिता न दत्ते यो दानदापनपरो मधुरं न वक्ति । दानं च दापनमथो मधुरा च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ १९९ ॥ केनाञ्जितानि नयनानि मृगाङ्गनानां को वा करोति रुचिराङ्गरुहान्मयूरान् । कश्चोत्पलेषु दलसंनिचयं करोति को वा करोति विनयं कुलजेषु पुंसु ॥ १६० ॥ अद्यापि नोज्झति हरः किल कालकूटं कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे । अम्भोनिधिर्वहति दुःसहवाडवाग्निमङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १६१ ॥ विश्वाभिरामगुणगौरवगुम्फितानां रोषोऽपि निर्मलधियां रमणीय एव । लोकप्रियैः परिमलैः परिपूरितस्य काश्मीरजस्य कटुतापि नितान्तरम्या ॥ १६२ ॥ किं जन्मना च महता पितृपौरुषेण शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् । कुम्भा न कूपमपि शोषयितुं समर्थाः कुम्भोद्भवेन मुनिनाम्बुधिरेव पीतः ॥ १६३ ॥ आरभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ १६४ ॥ सौजन्यधन्यजनुषः पुरुषाः परेषां दोषानपास्य गुणमेव गवेषयन्ति । त्यक्त्वा भुजंगमविषाणि पटीरगर्भात्सौरभ्यमेव पवनाः परिशीलयन्ति ॥ १६५ ॥ आक्रोशितोऽपि सुजनो न वदत्यवाच्यं निष्पीडितो मधुरमुद्वमतीक्षुदण्डः । नीचो जनो गुणशतैरपि सेव्यमानो हास्येन तद्वदति यत्कलहेऽप्यवाच्यम् ॥ १६६ ॥ यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति । तत्साधवो न न विदन्ति विदन्ति किं तु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥ १६७ ॥ उदधिर्वैधिरुर्व्यास्तं हनूमांस्तंतार निरवधि गगनं चेत्कौण्डकोशे विलीनम् । इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः स तु निरवधिरेकः सज्जनानां विवेकः ॥ १६८ ॥ नहि भवति वियोगः स्नेहविच्छेदहेतुर्जगति गुणनिधीनां सज्जनानां कदाचित् । घनतिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः

१ प्रकृत्या स्वभावेन वक्रा तनुर्यस्य. २ जडस्वभावः; (पक्षे) डलयोः सावर्ण्याज्जलात्मा जलरूपः. ३ दोषा रात्रिस्तस्याः कर; (पक्षे) दोषाणामाकरः. खनिरिति यावत्. ४ मित्रः सूर्यस्तस्य विपत्तिकालोऽस्तकालस्तस्मिन्; (पक्षे) मित्रं सुहृत्तद्विपत्तिकालः. ५ सदाशिवेन; (पक्षे) केनचित्स्वामिना. ६ सूर्यास्तसमये; (पक्षे) मित्रव्यसनकाले. ७ शिवप्रियताम्. ८ मनोहरलोम्नः. ९ न त्यजति. १० सुन्दर. ११ कुङ्कुमस्य. १२ अगस्त्येन. १३ मर्यादा. १४ तीर्णवान्. १५ ब्रह्माण्डकोशे. १६ गाढान्धकारः.

किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ १६९ ॥ धवलयति समग्रं चन्द्रमाजीवलोकं किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि[1] । भवति विदितमेतत्प्रायशः सज्जनानां परहितनिरतानामादरो नात्मकार्ये ॥ १७० ॥ प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम् । उदकममृतकल्पं[2] दद्युराजीवितान्तं नहि कृतमुपकारं साधवो विस्मरन्ति ॥ १७१ ॥ मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः[3][4] प्रीणयन्तः । परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १७२ ॥ उदयति यदि भानुः पश्चिमे दिग्विभागे प्रचलति यदि मेरुः शीततां याति वह्निः । विकसति यदि पद्मं पर्वताग्रे शिलायां न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ १७३ ॥ व्यतिकरितदिगन्ताः श्वेतमानैर्यशोभिः सुकृतविलसितानां स्थानमूर्जस्वलानाम् । अकलितमहिमानः केतनं मङ्गलानां कथमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति ॥ १७४ ॥ वपुरविहितसिद्धा एव लक्ष्मीविलासाः प्रतिजनकमनीयं कान्तिमत्केतयन्ति । अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा विकसितमिव पद्मं बिन्दवो माकरन्दाः ॥ १७५ ॥ वहति भुवनश्रेणीं शेषः फणाफलकस्थितां कमठपतिना मध्येपृष्ठं सदा स च धार्यते । तमपि कुरुते क्रोडाधीनं पयोनिधिरादरादहह महतां निःसीमानश्चरित्रविभूतयः ॥ १७६ ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् । दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ १७७ ॥ केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः । विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥१७८॥ उदन्वच्छन्ना भूः स च निधिरपां योजनशतं सदा पान्थः पूषा गगनपरिमाणं कलयति । इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥१७९॥ यदेतन्नेत्राम्भस्तदपि च समासाद्य तरुणीं कपोले व्यासक्तं कुचकलशमस्याः कलयति । ततः श्रोणीबिम्बं व्यवसितविलासं तदुचितं स्वभावस्वच्छानां पतनमपि भाग्यं वितरति ॥ १८० ॥ यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपामुपाधिस्तत्रायं जयति जानिकर्तुः प्रकृतिता । अयं कः संबन्धो यदनुहरते तस्य कुमुदं विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ १८१ ॥ गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे गुणा दोपायन्ते तदिदमपि नो विस्मयपदम्[5] । महामेघः क्षारं पिबति कुरुते वारि मधुरं फणी[6] क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥ १८२ ॥ प्रियप्राया[7] वृत्तिर्विनयमधुरो वाचि नियमः प्रकृत्या कल्याणी मतिरनवगीतः परिचयः । पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ १८३ ॥ असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो न सङ्गाद्दौर्जन्यं नहि सुजनता कस्यचिदपि । प्ररूढे संसर्गे[8] मणिभुज-

१ नाशयतीत्यर्थः. २ अमृततुल्यम्. ३ अमृतम्. ४ पङ्क्तिभिः. ५ आश्चर्यस्थानम्. ६ सर्पः. ७ आनन्दात्मिका. ८ संबन्धे.

गयोर्जन्मजनिते मणिर्नाहेर्दोषान्स्पृशति नहि सर्पो मणिगुणान् ॥ १८४ ॥ न साधुः कुत्रापि व्रजति खलु दोषं न गुणतां खलानां संसर्गैरपि कृतनिवासोऽपि निपुणः । यथा पक्षिव्यालैर्पिहिततनुश्चन्दनतरुर्न वैकृत्यं याति क्षपयति च तापं सुमनसाम् ॥ १८५ ॥ करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम् । हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ १८६ ॥ अचिन्त्याः पन्थानः किमपि महतामन्धकरिपोर्यदक्ष्णोऽभूत्तेजस्तदकृत कथाशेषमदनम् । मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ १८७ ॥ इहानेके सन्तः सततमुपकारिण्युपकृतिं कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः । कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ १८८ ॥ अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो विपक्षादम्भोजादुपगतवतो वा मधुलिहः । अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचयप्रबन्धः साधूनामयमनभिसंधानमधुरः ॥ १८९ ॥ तृषार्तैः सारङ्गैः प्रति जलधरं भूरि विरुतं घनैर्मुक्ता धाराः सपदि पयसस्तान्प्रति मुहुः । खगानां के मेघाः क इह विहगा मा जलमुचामयाच्यो नार्तानामनुपकरणीयो न महताम् ॥१९०॥ शिला बाला जाता चरणरजसा यत्कुलशिशोः स एवायं सूर्यः सपदि निजपादैर्गिरिशिलाम् । स्पृशन्भूयो भूयो न खलु कुरुते कामपि वधूं कुले कश्चिद्धन्यः प्रभवति नरः श्लाघ्यमहिमा ॥ १९१ ॥ परार्थव्यासङ्गादुपजहदपि स्वार्थपरतामभेदैकत्वं यो वहति गुरु भूतेषु सततम् । स्वभावादस्यान्तः स्फुरति ललितोदात्तमहिमा समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ॥ १९२ ॥ तमांसि ध्वंसन्ते परिणमति भूयानुपशयः सकृत्संवादेऽपि प्रथत इह चामुत्र च शुभम् । अथ प्रत्यासङ्गः कमपि महिमानं वितरति प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥१९३॥ प्रिया न्याय्या[8] वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं[9][10][11] त्वसन्तो नाभ्यर्थ्याः[12] सुहृदपि न याच्यः कृशधनः[13] । विपद्युच्चैः स्थेयं पदमनुविधेयं[14] च महतां सतां केनोद्दिष्टं[15] विषमं[16] मसिधाराव्रतमिदम्[17]॥१९४॥ प्रदानं प्रच्छन्नं[18] गृहमुपगते संभ्रमविधिः[19] प्रियं कृत्वा मौनं[20] सदसि कथनं नाप्युपकृतेः[21] । अनुत्सेको[22] लक्ष्म्यां निरभिभवसाराः[23] परकथाः सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १९५ ॥ विजेतव्या लङ्का चरणतरणीयो जलनिधिर्विपक्षः पौलस्त्यो[24] रणभुवि सहायाश्च कपयः । तथाप्येको रामः सकलमवधीद्राक्षसकुलं क्रियासिद्धिः[25] सत्त्वे भवति महतां नोपकरणे[26] ॥ १९६ ॥ रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा निरालम्बो मार्गश्चरण[27]रहितः

---

१ सर्पस्य. २ दानम्. ३ निस्तुलम्. ४ भूषणम्. ५ शंकरस्य. ६ अकरोत्. ७ वार्तावशिष्टो मदनो यस्मिंस्तत्तथाविधम्. ८ न्यायानुसारिणी. ९ वर्तनम्. १० पातकम्. ११ प्राणव्यये. १२ न याचितव्याः. १३ क्षीणधनः. १४ अनुसर्तव्यम्. १५ उपदिष्टम्. १६ अतिकठिनम्. १७ खड्गधाराताण्डवम्. १८ गुप्तम्. १९ अतिथौ. २० अनुद्घाटनम्. २१ उपकारस्य. २२ गर्वाभावः. २३ निन्दा. २४ रावणः. २५ कार्यसिद्धिः. २६ सामग्र्याम्. २७ अनूरुः.

सारथिरपि । रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १९७ ॥ धनुः [1]पौष्पं [2]मौर्वी [3]मधुकरमयी चञ्चलदृशां दृशां कोणो बाणः सुहृदपि [4]जडात्मा हिमकरः । तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १९८ ॥ विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो वसन्तः सामन्तः कुसुममिषवः सैन्यमबलाः । तथापि त्रैलोक्यं जयति मदनो [5]देहरहितः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १९९ ॥ घटो [6]जन्मस्थानं [7]मृगपरिजनो भूर्जवसनं वने वासः कन्दैरशनमपि दुःस्थं वपुरिदम् । अगस्त्यः [8]पाथोधिं यद[9]कृत कराम्भोजकुहरे क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ २०० ॥ ये जाते [10]व्यसने [11]निराकुलधियः संपत्सु नाभ्युन्नताः प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणप्रयोगैरपि । [12]ह्रीमन्तः स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डितास्ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ २०१ ॥ [13]क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः स्वार्थो यस्य परार्थ एव स पुमानेकः सताम[14]ग्रणीः । दुष्पूरोदरपूरणाय पिबति [15]स्रोतःपतिं [16]वाडवो जीमूत[17]स्तु [18]निदाघतापितजगत्संतापविच्छित्तये ॥ २०२ ॥ मज्जन्तोऽपि [19]विपत्पयोधिगहने निःशङ्कधैर्यावृताः कुर्वन्त्येव परोपकारमनिशं सन्तो यथाशक्ति वै । राहोरुग्र[20]करालवक्त्रकुहरग्रासाभिभूतोऽप्यलं चन्द्रः किं न जनं करोति सुखिनं ग्रासावशेषैः [21]करैः ॥ २०३ ॥ वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां व्यसनं [22]स्वयोषिति रतिर्लोकापवादाद्भयम् । भक्तिः [23]शूलिनि शक्ति[24]रात्मदमने संसर्गमुक्तिः खलेष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ २०४ ॥ दृश्यन्ते भुवि भूरिनिम्बतरवः कुत्रापि ते चन्दनाः पाषाणैः परिपूरिता वसुमती [25]वज्रो मणिर्दुर्लभः । श्रूयन्ते [26]करटारवाश्च सततं चैत्रे [27]कुहूकूजितं तन्मन्ये खलसंकुलं जगदिदं द्वित्राः क्षितौ सज्जनाः ॥ २०५ ॥ घर्मार्ते न तथा सुशीतलजलैः स्नानं न [28]मुक्तावलिर्न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम् । प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसः सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥ २०६ ॥ धर्मे तत्परता मुखे मधुरता दाने समुत्साहिता मित्रेऽवञ्चकता गुरौ विनयिता चित्तेऽतिगम्भीरता । आचारे शुचिता गुणे रसिकता शास्त्रेऽतिविज्ञानिता रूपे सुन्दरता हरौ भजनिता सत्स्वेव संदृश्यते ॥ २०७ ॥ [29]सौजन्यामृतसिन्धवः परहितप्रारब्धवीरव्रता वाचालाः पर-

---

१ पुष्पमयम्. २ ज्या. ३ भ्रमररूपा. ४ बुद्धिरहित; (पक्षे डलयोः सावर्ण्यात्) जलात्मा जलरूपः. ५ अनङ्गः. ६ उत्पत्तिस्थानम्. ७ मृगा एव परिजनः. ८ समुद्रम्. ९ अकरोत्. १० संकटे. ११ अव्यग्रमनसः. १२ लज्जावन्तः. १३ नीचाः. १४ अग्रेसरः. १५ समुद्रम्. १६ वाडवाग्निः. १७ मेघः. १८ ग्रीष्मः. १९ विपदेव पयोधिः समुद्रः. २० भयंकरम्. २१ किरणैः. २२ स्वस्त्रियाम्. २३ शंकरे. २४ मनोजये. २५ हीरकमणिः. २६ काकशब्दाः. २७ कोकिलशब्दाः. २८ मुक्तासरः. २९ सुजनतामृतसमुद्राः.

वर्णने निजगुणालापे च मौनव्रताः। आपत्स्वप्यविलुप्तधैर्यनिचयाः संपत्स्वनुत्सेकिनो मा भूवन्खलवक्त्रनिर्गतविषम्लाननानाः सज्जनाः ॥ २०८ ॥ ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः। स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये तैः स्तम्भैरिव सुस्थिरैः किल भरक्रान्ता धरा धार्यते ॥ २०९ ॥ क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्पर्जन्यश्चपलाश्रयोऽभ्रपटलादृश्यः सुवर्णाचलः। शून्यं व्योम रसा द्विजिह्वविधृता स्वर्धामधेनुः पशुः काष्ठं कल्पतरुर्दृषत्सुरमणिस्तत्केन साम्यं सताम् ॥ २१० ॥ कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः कस्माद्वा जलधारयैव धरणिं धाराधरः सिञ्चति। भ्रामं भ्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ २११ ॥ अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः। कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्राप्यते ॥ २१२ ॥ गर्वं नोद्वहते न निन्दति परान्नो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियं च सहते क्रोधं च नालम्बते। श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम् ॥ २१३ ॥ किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः। किं चाङ्गीकृतमुत्सृजन्हि मनसा श्लाघ्यो जनो लज्जते निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ २१४ ॥ सेतूपक्रमकौतुकाहृतगिरिप्रक्षेपवेगोच्छलन्निःशेषाम्बुपरिस्फुटोदरदरीगम्भीरिमा सागरः। चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भयं मारुतेः पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घ्यता ॥ २१५ ॥ शूराः सन्ति सहस्रशः प्रतिपदं विद्याविदोऽनेकशः सन्ति श्रीपतयो निरस्तधनदास्तेऽपि क्षितौ भूरिशः। ये कर्मण्यनिरीक्ष्यवान्यमनुजं दुःखार्दितं यन्मनस्ताद्रूप्यं प्रतिपद्यते जगति ते सत्पूरुषाः पञ्चषाः ॥ २१६ ॥ दीनानां कल्पवृक्षः सुगुणफलनतः सज्जनानां कुटुम्बी आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः। सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥ २१७ ॥ नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः स्वार्थान्संपादयन्तो विततबहुतरारम्भयत्नाः परार्थे। क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दुःखयन्तः सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्थनीयाः ॥ २१८ ॥ वक्रे वल्गाप्रकर्षः समरभुवि तव प्राणरक्षापि दैवात्स्वेच्छाचारो न चास्ते नहि भवति तथा भारवाहो नितान्तम्। इत्युक्तोऽश्वः खरेण प्रहसितवदनो मूक एवावतस्थे तस्माज्जात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ते ॥ २१९ ॥

---

१ विपत्तिकालेषु. २ गर्वरहिताः. ३ हर्षयुक्ता भवन्ति. ४ पृथ्वी. ५ विद्युत्. ६ पृथ्वी. ७ प्रकटयन्तः. ८ सङ्ग्रामाङ्गणे.

## दुर्जननिन्दा ।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ १ ॥ न विना परवादेन रमते दुर्जनो जनः । काकः सर्वरसान्भुङ्क्ते विनामेध्यं[1] न तृप्यति ॥ २ ॥ विशिख[2]व्याल[3]योरन्त्यवर्णाभ्यां[4] यो विनिर्मितः । परस्य हरति प्राणान्नैतच्चित्रं कुलोचितम् ॥ ३ ॥ विषमा[5] मलिनात्मानो[6] द्विजिह्वा जिह्मगा[7] इव । जगत्प्राणहरा नित्यं कस्य नोद्वेजकाः खलाः ॥ ४ ॥ दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् । मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ५ ॥ खलानां कण्टकानां च द्विविधैव प्रतिक्रिया[8] । उपानन्मुखभङ्गो[9] वा दूरतो वापि वर्जनम् ॥ ६ ॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः[10] ॥ ७ ॥ ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः । कवलीकुरुते स्वस्थं विधुं दिवि विधुंतुदः ॥ ८ ॥ क्वचित्सर्पोऽपि मित्रत्वमीयान्नैव खलः क्वचित् । न शेषशायिनोऽप्यस्य वशे दुर्योधनो हरेः ॥ ९ ॥ उपकारोऽपि नीचानामपकारो हि जायते । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ १० ॥ अलकाश्च खलाश्चैव मूर्धभिः सुजनैर्धृताः । उपर्युपरि संस्कारेऽप्याविष्कुर्वन्ति वक्रताम् ॥ ११ ॥ खलानां धनुषां चापि सद्वंश[11]जनुषामपि । गुण[12]लाभो भवेदाशु परहृच्छेदकारकः ॥ १२ ॥ बहुनिष्कपटद्रोही[13] बहुधान्योपघातकः[14] । रन्ध्रान्वेषी[15] च सर्वत्र दूषको मूषको यथा ॥ १३ ॥ नौश्च दुर्जनजिह्वा च प्रतिकूलविसर्पिणी[16] । परप्रतारणायैव[17] दारुणा[18] केन निर्मिता ॥ १४ ॥ यस्मिन्वंशे[19] समुत्पन्नस्तमेव निजचेष्टितैः[20] । दूषयत्यचिरेणैव घुणकीट[21] इवाधमः ॥ १५ ॥ स्वभावकठिनस्यास्य कृत्रिमां[22] बिभ्रतो नतिम्[23] । गुणो[24]ऽपि परहिंसायै चापस्य[25] च खलस्य च ॥ १६ ॥ अयःपिण्ड इवोत्तप्ते खलानां हृदये क्षणात् । पतिता एव नश्यन्ति गुणास्तोयकणा इव ॥ १७ ॥ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः । श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १८ ॥ वक्रतां बिभ्रतो यस्य गुह्यमेव प्रकाशते । कथं न च समानः स्यात्पुच्छेन पिशुनः शुनः ॥ १९ ॥ स्नेहेन[26] भूति[27]दानेन कृतः स्वच्छोऽपि दुर्जनः । दर्पणश्चान्तिके तिष्ठन्करोत्येकमपि द्विधा ॥ २० ॥ आजन्मसिद्धं कौटिल्यं खलस्य च हल[28]स्य च । सोढुं तयोर्मुखाक्षेपमलमेकैव

---

१ विष्ठाद्यशुचि. २ बाणः. ३ सर्पः. ४ अन्त्यवर्णः खल इति ५ वक्राः. ६ दुष्टस्वभावाः. ७ सर्पाः. ८ प्रतीकारः. ९ उपानहा पादस्थचर्मणा मुखभङ्गः. १० निवारणात्; (पक्षे) जलात्. ११ कुलम्; (पक्षे) वेणुः. १२ विनयादिः; (पक्षे) रज्जुः. १३ बहु-निष्कपट-द्रोही; (पक्षे) बहु-निष्क-पट-द्रोही इति पदच्छेदः. १४ बहुधा-अन्योपघातकः; (पक्षे) बहु-धान्य-उपघातकः इति पदच्छेदः. १५ दूषणान्वेषी; (पक्षे) छिद्रान्वेषी. १६ प्रतितीरम्; (पक्षे) विरुद्धम् १७ परेषां प्रकर्षेण तारणाय; (पक्षे) परेषां वञ्चनाय १८ भयंकरा; (पक्षे) काष्ठेन. १९ वेणौ; (पक्षे) कुले. २० स्वकर्मभिः २१ काष्ठवेधकः कृमिः. २२ क्रियया निर्वृताम्, (पक्षे) कपटयुक्ताम्. २३ नम्रत्वम्. २४ मौर्वी; (पक्षे) विनयादिः. २५ धनुषः. २६ तैलेन; (पक्षे) ममतया. २७ भस्म; (पक्षे) वैभवम्. २८ लाङ्गलम्.

सा क्षमा ॥ २१ ॥ यथा यथैव स्नेहेन भूयिष्ठमुपचर्यते। धत्ते तथा तथा तापं महान्वैश्वानरः खलः ॥ २२ ॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्। अहो नु सदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ २३ ॥ दुर्जनः कृतशिक्षोऽपि सज्जनो नैव जायते। अपि गङ्गाजलस्नानान्नाधः केशः कुशायते ॥ २४ ॥ दह्यमानाः सुतीक्ष्णेन नीचाः परयशोग्निना। अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ २५ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम्। दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥ २६ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारणम्। व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ २७ ॥ संत्यज्य शूर्पवद्दोषान्गुणान्गृह्णाति पण्डितः। दोषग्राही गुणत्यागी पल्लोलीव हि दुर्जनः ॥ २८ ॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन्। सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥२९॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः। सर्पो दशति कालेन दुर्जनस्तु पदेपदे ॥ ३० ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः। शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ३१ ॥ अशक्ताः शक्तिमात्मीयां श्लाघयन्ते च दुर्जनाः। ते भवन्त्युपहासाय महतामेव संनिधौ ॥ ३२ ॥ सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः। मन्त्रेण शाम्यते सर्पो न खलः शाम्यते कदा ॥३३॥ दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम्। मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ ३४ ॥ दुर्जनः सुजनो न स्यादुपायानां शतैरपि। अपानं मृत्सहस्रेण धौतं चास्यं कथं भवेत् ॥ ३५ ॥ खलास्तु कुशलाः साधुहितप्रत्यूहकर्मणि। निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥३६॥ अहो बत महत्कष्टं विपरीतमिदं जगत्। येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ ३७ ॥ तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः। वृश्चिकस्य विषं पुच्छं सर्वाङ्गे दुर्जनो विषम् ॥ ३८ ॥ दुर्जनो नार्जवं याति सेव्यमानोऽपि नित्यशः। स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ ३९ ॥ वर्धनं वाथ संमानं खलानां प्रीतये कुतः। फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ ४० ॥ दुर्जनैरुच्यमानानि वचांसि मधुराण्यपि। अकालकुसुमानीव भयं संजनयन्ति हि ॥ ४१ ॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम्। विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥ ४२ ॥ अहो खलभुजंगस्य विपरीतो वधक्रमः। अन्यस्य दशति श्रोत्रमन्यः प्राणैर्वियुज्यते ॥ ४३ ॥ न यत्नकोटिशतकैरपि दुष्टः सुधीर्भवेत्। किं मर्दितोऽपि कस्तूर्या लशुनो याति सौरभम् ॥ ४४ ॥ पाषाणो भिद्यते टङ्कैर्वज्रं वज्रेण भिद्यते। सर्पोऽपि भिद्यते मन्त्रैर्दुष्टात्मा नैव भिद्यते ॥ ४५ ॥ दुर्जनो दोषमादत्ते दुर्गन्धिमिव सूकरः। सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥ ४६ ॥ अपूर्वा रसनाव्यालाः खलाननबिलेशयाः। कर्णमूले स्पृशन्त्यन्यं हरन्त्यन्यस्य जीवितम् ॥ ४७ ॥ दुर्जनेन समं सख्यं प्रीतिं

१ पृथ्वी; (पक्षे) शान्तिः. २ बाहुल्येन. ३ पूज्यते. ४ अग्निः; (पक्षे) वै-श्वा-नरः इति च्छेदः ५ तुलायष्टेः. ६ राजहंसत्वम्. ७ चालिनी. ८ चञ्चलम्. ९ निरपराधानाम्. १० लज्जां प्राप्नोति. ११ जिह्वारूपाः सर्पाः.

चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ ४८ ॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥ ४९ ॥ मनस्यन्यद्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ५० ॥ जीवनग्रहणे[1] नम्रा[2] गृहीत्वा पुनरुन्नताः[3] । किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य[4] दुर्जनाः ॥५१॥ बिभ्राणा गरलं कण्ठे भुजंग[5]परिवेष्टिता । शांभवीव तनुः कस्य न वन्द्या दौर्जनी[6] सभा ॥ ५२ ॥ अक्षमालापवृत्तिज्ञा[7] कुशासनपरिग्रहा[8] । ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला[9] ॥ ५३ ॥ खलः करोति दुर्वृत्तं नूनं फलति साधुषु । दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥ ५४ ॥ कुर्वते स्वमुखेनैव बहुधान्यस्य[10] खण्डनम् । नमः पतनशीलाय मुसलाय खलाय च ॥ ५५ ॥ अपवादादभीतस्य समस्य गुणदोषयोः । असद्वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥ ५६ ॥ न देवाय न धर्माय न बन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्तं भुज्यते राजतस्करैः ॥ ५७ ॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदयं क्रोधसंयुक्तं त्रिविधं धूर्तलक्षणम् ॥ ५८ ॥ निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः । चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ५९ ॥ खलः सज्जनकार्पासध्वंक्षणै[11]कहुताशनः । परदुःखाग्निधमनमारुतः केन वर्ण्यताम् ॥ ६० ॥ यशःसौरभ्यलशुनः[12] शान्तिशैत्यहुताशनः[13] । कारुण्यकुसुमाकाशः[14] खलः सज्जनदुःखदः ॥ ६१ ॥ अन्तर्मलिनदेहेन बहिराह्लादकारिणा । महाकालफलेनेव[15] के खलेन न वञ्चिताः ॥ ६२ ॥ अहो प्रकृतिसादृश्यं[16] श्लेष्मणो[17] दुर्जनस्य च । मधुरैः[18] कोपमायाति कटुकेनैव शाम्यति ॥ ६३ ॥ ईषल्लब्धप्रवेशोऽपि स्नेहविच्छेदकारकः । कृतक्षोभो नरीनर्ति[19] खलो मन्थानदण्डवत् ॥ ६४ ॥ विदूणवती पुरस्तैक्ष्ण्यं पृष्ठतः कुर्वती गुणम् । कर्णान्विध्यति लोकस्य सूचीवत्सूचकस्य वाक् ॥ ६५ ॥ सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता । यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ६६ ॥ कापूरुषः कुक्कुरश्च भोजनैकपरायणः । लालितः पार्श्वमायाति वारितो न च गच्छति ॥ ६७ ॥ मालिन्यमवलम्बेत यदा दर्पणवत्खलः । तदैव तन्मुखे देयं रजो नान्या प्रतिक्रिया ॥ ६८ ॥ नीचः समुत्थितोऽवश्यमनवाप्य पराश्रयम् । छिद्रेण रतिमाप्नोति दृष्टान्तोऽत्र

---

१ उदकम्; (पक्षे) प्राणाः. २ अधोमुखाः; (पक्षे) विनीताः. ३ ऊर्ध्वमुखाः; (पक्षे) उद्धताः. ४ एकरज्जुसबद्धघटमालारूप 'राहाट' इति प्रसिद्धम्. ५ सर्पाः; (पक्षे) जाराः. ६ दुर्जनसबन्धिनी ७ अक्षमा य आलापास्तेषां वृत्तिज्ञा; (पक्षे) अक्षमाला जपमाला तस्या अपवृत्तिर्भ्रमण जानातीति सा. ८ कुत्सितं यच्छासन शिक्षा तस्य परिग्रहोऽवलम्बो यस्याः सा; (पक्षे) कुशासन दर्भासन तत्परिग्रहः स्वीकारो यस्याः सा. ९ समे साधौ खला; (पक्षे) मेखलया सहिता. १० बहुधा अन्यस्य परस्य खण्डनम्; (पक्षे) पुष्कलधान्यस्य खण्डनं चूर्णम्. ११ दहनम्. १२ कीर्तिरेव सौगन्ध्य तन्नाशकत्वाल्लशुन इव. लशुनो हि कस्तूर्यादेः सौगन्ध्यं नाशयतीति प्रसिद्धिः. १३ शान्तिरेव शैत्यं तन्नाशकत्वादग्निरिव. ४१ कारुण्यमेव कुसुम तस्याकाशः. आकाशस्य यथा पुष्प कदापि नोपलभ्यते तद्वत्खले कारुण्य कदापि नोपलभ्यत इत्यर्थः. १५ धत्तूरफलेन. १६ स्वभावसाम्यम्. १७ कफस्य. १८ साधुद्रव्यैः; (पक्षे) सुवचनैः. १९ पुनः पुनर्नृत्यति.

[1]कटीभवः ॥ ६९ ॥ दुर्जनः परिहर्तव्यः प्रत्यक्षो द्विपदः पशुः । विध्यते वा कुशल्येन अदृष्टः कण्टको यथा ॥ ७० ॥ यथा वृष्टिः समुद्रेषु भुक्तस्योपरि भोजनम् । एवं प्रीतिः खलैः सार्धमुत्पन्नेऽर्थेऽवसीदति ॥ ७१ ॥ क्वचित्कार्यवशान्नीचोऽप्यलं भवति नो महान् । कांस्यस्यैव हि राज्ञोऽपि दर्पणः कनकस्य न ॥ ७२ ॥ दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् । मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥ ७३ ॥ यथा दोषो विभात्यस्य जनस्य न तथा गुणः । प्रायः कलङ्क एवेन्दोः प्रस्फुटो न प्रसन्नता ॥ ७४ ॥ संपत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् । शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः[2] ॥ ७५ ॥ प्रायः प्रकुप्यतितरां प्रीत्यैव प्रखलो जनः । नयनं स्नेहसंपर्कात्कालुष्यं समुपैत्यलम् ॥ ७६ ॥ प्राप्य वित्तं जडास्तूर्णं निर्वृतिं यान्ति नान्यथा । तोयमासाद्य गर्जन्ति न रिक्ताः स्तनयित्नवः[3] ॥ ७७ ॥ नैवात्मनो विनाशं गणयति पिशुनः परव्यसनहृष्टः । प्राप्य सहस्रविनाशं समरे नृत्यति कबन्ध[4] इव ॥ ७८ ॥ रविरपि न दहति तादृग्यादृक्संदहति वालुकानिकरः[5] । अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ७९ ॥ त्यक्त्वापि निजप्राणान्परहितविघ्नं खलः करोत्येव । कवले पतिता सद्यो वमयति[6] खलु मक्षिकान्नभोक्तारम् ॥ ८० ॥ कृतमपि महोपकारं पय इव पीत्वा निरातङ्कम्[7] । प्रत्युत[8] हन्तुं यतते काकोदरसोदरः[9] खलो जगति ॥ ८१ ॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ८२ ॥ एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् । सिद्धार्थानामेषां[10] स्नेहोऽप्यश्रूणि[11][12] पातयति ॥ ८३ ॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते । पुष्पे फले विरागी क्रमेलकः[13] कण्टकौघमिव ॥ ८४ ॥ सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति । पवनः परागवाही रथ्यासु[14] वहन्रजस्वलो[15] भवति ॥ ८५ ॥ परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति । अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥ ८६ ॥ दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः । पाणौ पयसा दग्धे तक्रं फूत्कृत्य[16] बालकः पिबति ॥ ८७ ॥ विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः । यदहिर्नकुलद्वेषी[17] स्वकुलद्वेषी पुनः पिशुनः ॥ ८८ ॥ अतिमलिने[18] कर्तव्ये भवति खलानामतीव निपुणा[19] धीः । तिमिरे[20] हि कौशिकानां[21] रूपं प्रतिपद्यते दृष्टिः ॥ ८९ ॥ लब्धोत्साहो नीचः प्रथमतरं स्वामिनं पराभवति । भूमिरजो रथ्यादावुत्थापकमेव संवृणुते ॥ ९० ॥ उपकृतमनेन सुतरामित्यसतामस्ति न क्वचिद्-

---

१ पुरुषव्यञ्जनम्. २ लोहम्. ३ मेघाः. ४ अशिरस्क कलेवरम्. ५ समूहः. ६ वान्ति कारयति. ७ निःशङ्कम्. ८ वैपरीत्ये. ९ सर्पबन्धुः १० श्वेतसर्षपाणाम्; (पक्षे) सिद्धोऽर्थः कार्य येषां ते. ११ तैलम्; (पक्षे) स्नेहभावः. १२ नेत्रोदकम्. १३ उष्ट्रः. १४ वीथीषु. १५ रजोयुक्तः. १६ फूत्कार कृत्वा. १७ नकुल-द्वेषी; (पक्षे) न कुल-द्वेषी. १८ अत्यन्तमलदूषिते. १९ पूर्णा. २० तमसि. २१ घूकानाम्.

पेक्षा । होतुः स्वहस्तमाश्रितमुद्धूतोऽग्निर्दहत्येव ॥ ९१ ॥ परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥ ९२ ॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते[1] । पवनाशिनो[2]ऽपि भुजगाः परपरितापं न मुञ्चन्ति ॥ ९३ ॥ प्रेरयति परमनार्यः शक्तिविहीनोऽपि जगदभिद्रोहे । तेजयति शस्त्रधारां स्वयमसमर्था शिला छेत्तुम् ॥ ९४ ॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः[3] । तरुणीकच इव नीचः कौटिल्यं नैव विजहाति ॥ ९५ ॥ व्योम्नि स वासं कुरुते चित्रं निर्माति सुन्दरं पवने । रचयति रेखाः सलिले चरति खले यस्तु सत्कारम् ॥ ९६ ॥ अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः । परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ ९७ ॥ मृद्घटवत्सुखभेद्यो दुःसंधानश्च[4] दुर्जनो भवति । सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु संधेयः ॥ ९८ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् । लुब्धक[5]धीवरपिशुना निष्कारणवैरिणो[6] जगति ॥ ९९ ॥ रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि । अथवालं पापात्मन्कृतया कथयापि ते हतया ॥ १०० ॥ विध्वस्त[7]परगुणानां भवति खलानामतीव मलिनत्वम् । अन्तरितशशिरुचामपि सलिलमुचां[8] मलिनिमा[9]भ्यधिकः ॥ १०१ ॥ परगुह्य[10]गुप्तिनिपुणं गुणमय[11]मखिलैः समीहितं नितराम् । ललिताम्बरमिव सज्जनमाखव इव दूषयन्ति खलाः ॥ १०२ ॥ दूरे[12]स्थापितहृदयो गूढ[13]रहस्यो निकामसाशङ्कः[14] । आश्लेषो बालानां भवति खलानां च संभेदः ॥ १०३ ॥ धर्मारम्भेऽप्यसतां परहिंसैव प्रयोजिका भवति । काकानामभिषेकेऽकारणतां वृष्टि[15]रनुभवति ॥ १०४ ॥ यद्वीक्ष्यते खलानां माहात्म्यं क्वापि दैवयोगेन । काकानामिव शौक्ल्यं तदपि हि न चिरादनर्थाय ॥ १०५ ॥ यत्खलु खलमुखहुतवहविनिहितमपि शुद्धिमेव परमेति । तदनलशौचमिवांशुकमिह लोके दुर्लभं प्रेम ॥ १०६ ॥ वंश[16]ावलम्बनं[17] यद्यो विस्तारो[18] गुणस्य[19] या च नतिः । तज्जालस्य खलस्य च निर्जी[20]वकुसुमप्रणाशाय ॥ १०७ ॥ सुगृहीत[21]मलिनपक्षा लघवः[22] परभेदिन[23]स्तीक्ष्णाः[24] । पुरुषा अपि

---

१ व्यथां करोति. २ वायुभक्षकाः. ३ बहुप्रकारैः स्नेहैः सुगन्धतैलादिभिः; (पक्षे) बह्वया प्रीत्या. ४ दुःखेन सधातुं शक्यः. ५ व्याधः. ६ निष्कारणशत्रवः. ७ नाशिताः. ८ मेघानाम्. ९ मालिन्यम्. १० गुह्यगोपने निपुणम्. ११ तन्तुप्रचुरम्; (पक्षे) दयादाक्षिण्यादिप्रचुरम्. १२ दूरे स्थापितं हृदय येन; (पक्षे) दूरे स्थापितमन्त.करण येन. १३ अन्तःकरणविषयीभूतम्; (पक्षे) मन्त्रादि. १४ भीतिः; (पक्षे) विश्वासाभावः. १५ काकैः स्नाने कृते वृष्टिर्न भवतीति वृद्धव्यवहारः. १६ कुलस्य; (पक्षे) वेणोः. १७ जन्यत्वम्; (पक्षे) आश्रितत्वम्. १८ आधिक्यम्; (पक्षे) दैर्घ्यम्. १९ पाण्डित्यशौर्यादेः; (पक्षे) रज्जोः. २० विश्वस्तनाशायेत्यर्थः. २१ सम्यग्गृहीतो दुष्टानां पक्षोऽङ्गीकारो यैः; (पक्षे) झटिति निष्कासनानर्हाः श्यामपक्षवन्त इत्यर्थ.. २२ नीचाः; (पक्षे) अल्पपरिमाणवन्तः. २३ परान्भेदयन्ति ते. अन्येषा परस्परभेदजननेन कलहप्रवर्तका इत्यर्थ'; (पक्षे) इतरच्छेदकारकाः. २४ क्रूरकर्माण.; (पक्षे) यथाश्रुतम्.

विशिखा अपि गुण[1]च्युताः कस्य न भयाय ॥ १०८ ॥ स्वकपोलेन[2] प्रकटीकृतं प्रमत्तत्वकारणं किमपि । द्विरदस्य दुर्जनस्य च मदं चकारैव दानमपि ॥ १०९ ॥ संतापमोहकम्पान्संपादयितुं निहन्तुमपि जन्तून् । सखि दुर्जनस्य भूतिः प्रसरति दूरं ज्वरस्येव ॥ ११० ॥ अर्थग्रहणे न तथा व्यथयति कटुकूजितैर्यथा पिशुनः । रुधिरादानादधिकं दुनोति कर्णे क्वण[3]न्मशकः ॥ १११ ॥ क्षुद्रो[4]द्भवस्य कटुतां[5] प्रकटयतो विदधतश्च मद[6]मुच्चैः । मधुनोऽधमपुरुषस्य च गरिमा लघिमा च भेदाय ॥ ११२ ॥ त्यजति च गुणान्सुदूरं तनु[7]मपि दोषं निरीक्ष्य गृह्णाति । मुक्त्वालंकृतकेशान्यूकामिव वानरः पिशुनः ॥ ११३ ॥ दोषा[8]लोकननिपुणाः परुषगिरो दुर्जनाश्च घूकाश्च । दर्शनमपि भयजननं येषामनिमित्तपिशुनानाम् ॥ ११४ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥ ११५ ॥ हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् । दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ११६ ॥ अन्यस्य लगति कर्णे जीवितमन्यस्य हरति बाणं इव । हृदयं दुनोति पिशुनः कण्टक इव पादलग्नोऽपि ॥ ११७ ॥ स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम् । पिशुनानां पनसानां कोशाभोगोऽप्यविश्वास्यः ॥ ११८ ॥ वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि । रसमपि तु न प्रतीच्छति बहुदोषः संनिपातीव ॥ ११९ ॥ परपरितापनकुतुकी गणयति नात्मीयमपि तापम् । परहतिहेतोः पिशुनः संदंश इव स्वपीडनं सहते ॥ १२० ॥ सगुणापि हन्त विगुणा भवति खलास्याद्विचित्रवर्णापि । आखुमुखादिव शाटी पदपरिपाटी कवेः कापि ॥ १२१ ॥ कतिपयदिनपरमायुषि मदकारिणि यौवने दुरात्मानः । विदधति तथापराधं जन्मैव यथा वृथा भवति ॥ १२२ ॥ दुश्चरितैरेव निजैर्भवति दुरात्मा विशङ्कितो नित्यम् । दर्शनपथमापन्नं पन्नगकुलमाकुलीभवति ॥ १२३ ॥ स्वयमपि भूरि[9]च्छिद्रश्चापल[10]मपि सर्वतोमुखं[11] तन्वन् । तितउ[12]स्तुषस्य पिशुनो दोषस्य विवेचने[13]ऽधिकृतः ॥ १२४ ॥ पिशुनः खलु सुजनानां खलमेव पुरो निधाय जेतव्यः । कृत्वा ज्वरमात्मीयं जिगाय बाणं रणे विष्णुः ॥ १२५ ॥ वक्राः कपटस्निग्धा मलिनाः कर्णान्तिके प्रसज्जन्तः । कं भेदयन्ति न सखे खलाश्च गणिकाकटाक्षाश्च ॥ १२६ ॥ कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय । यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥ १२७ ॥ आचरति दुर्जनो यत्सहसा मनसोऽप्यगोचरानर्थान् । तन्न न जाने जाने स्पृशति मनः किं तु नैव निष्ठुरताम् ॥ १२८ ॥ परितोषयिता न क-

---

१ साधुत्वादिगुणहीना ; (पक्षे) ज्यायाश्च्युताः. २ स्वस्य गण्डस्थलेन प्रकटीकृतम्. दानस्य तत उत्पत्तेरिति भाव ; (पक्षे) स्वमुखेनाभिहितम्. एव मया दानं कृतमिति. ३ गुणगुणेति शब्दं कुर्वन्. ४ मधुमक्षिका; (पक्षे) नीचः. ५ रूक्षताम्; (पक्षे) कटुभाषिताम्. ६ उन्मादम्; (पक्षे) गर्वम्. ७ सूक्ष्मम्. ८ दूषणानि; (पक्षे) रात्रिः. ९ बहुवाच्य ; (पक्षे) बहुरन्ध्रः. १० मौखर्यम्; (पक्षे) चापल्यम्. ११ सकलजनसमक्षम्, (पक्षे) सर्वदिग्विषयम्. १२ चालनी. १३ निर्णये; (पक्षे) स्वीकारे.

श्चन स्वगतो यस्य गुणोऽस्ति देहिनः । परदोषकथाभि[1]रल्पकः स्वजनं तोषयितुं किलेच्छति ॥ १२९ ॥ [2]सहजान्धदृशः [3]स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः । [4]स्वगुणोच्चगिरो [5]मुनिव्रताः [6]परवर्णग्रहणेष्वसाधवः ॥ १३० ॥ सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः । सहसैव समुद्गिरन्त्यमी क्षपयन्त्येव हि तन्मनीषिणः ॥ १३१ ॥ उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः । असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ १३२ ॥ परितप्यत एव नोत्तमः परितप्तोऽप्यपरः [7]सुसंवृतिः । परवृद्धिभि[8]राहितव्यथः [9]स्फुटनिर्भिन्नदुराशयोऽधमः ॥ १३३ ॥ [10]अनिराकृततापसंपदं [11]फलहीनां [12]सुमनोभिरुज्झिताम् । खलतां [13]खलतामिवा[14]सतीं प्रतिपद्येत कथं बुधो जनः ॥ १३४ ॥ अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शिति[15]कण्ठमिच्छति । वसनाशनमात्रमस्ति चे[16]द्धनदादप्यतिरिच्यते खलः ॥ १३५ ॥ अहमेव [17]गुरुः [18]सुदारुणानामिति हालाहल मा स्म तात [19]दृप्यः । ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ १३६ ॥ वदने विनिवेशिता भुजंगी पिशुनानां [20]रसनामिषेण धात्रा । अनया कथमन्यथावलीढा नहि जीवन्ति जना मनागमन्त्राः ॥ १३७ ॥ वहति [21]विषधरान्[22]पटीरजन्मा शिरसि मषीपटलं दधाति दीपः । विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥ १३८ ॥ मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥ १३९ ॥ [23]अन्तर्वाणिं मन्यमानः खलोऽयं [24]पौरोभाग्यं [25]सूक्तिमुक्तासु धत्ते । [26]सर्वानन्दिन्यङ्के कामिनीना[27]मीर्मं [28]मार्गत्येष वै [29]बम्भरालिः ॥ १४० ॥ बोधितोऽपि बहुसूक्तिविस्तरैः किं खलो जगति सज्जनो भवेत् । स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्क्वचित् ॥ १४१ ॥ विद्यया विमलयाप्यलंकृतो दुर्जनः [30]सदसि मास्तु कश्चन । साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ॥ १४२ ॥ दोषपोषमभियाति परं यो बाधमेति बहुसज्जनयोगात् । संमतौ विमतिमात्रसहायो दुर्जनो भ्रम इवातिचकास्ति ॥ १४३ ॥ [31]उन्नतं पदमवाप्य यो [32]लघुर्हेलयैव स पतेदिति ब्रुवन् । शैलशेखरगतः [33]पृषद्गण[34]श्चारुमारुत[35]धुतैः

---

१ तुच्छः. २ स्वाभाविकी अन्धा अपश्यन्ती दृग्येषां ते. ३ स्वदोषे. ४ आत्मप्रशंसायां प्रगल्भवाच इत्यर्थः. ५ मौनव्रतिनः. ६ परस्तुतिवचनेषु. ७ शोभना संवृतिः परितापगोपनं यस्य सः. ८ उत्पादितसंतापः. ९ स्फुटं निर्भिन्नः प्रकाशितो दुराशयः परशुभद्वेषलक्षणो दुरभिप्रायो यस्य सः. १० अनिराकृतानिवारिता तापसपत्तापातिशयो यया ताम्; (पक्षे) सतापजननैकस्वभावादपरत्रासतश्छायाविरहात्. ११ इहामुत्र चोपकारशून्याम्; (पक्षे) सर्वार्थरहिताम्. १२ बुधैरुज्झिताम्; (पक्षे) पुष्पैर्वर्जिताम्. १३ खस्य लताम्. गगनलतिकामित्यर्थ. १४ दुष्टाम्; (पक्षे) निरुपाख्याम्. १५ शिवम्. १६ कुबेरात्. १७ श्रेष्ठः. १८ अतितीव्रानाम्. १९ गर्वोद्धतो मा भव. २० जिह्वाच्छलेन. २१ सर्पान्. २२ चन्दनः. २३ शास्त्रवित्. २४ दोषैकदृक्त्वम्. २५ सूक्तय एव मुक्ताफलानि तासु. २६ सर्वेषामाह्लादके. २७ व्रणम्. २८ शोधयति. २९ मक्षिका. ३० सभायाम्. ३१ उत्कर्षम्; (पक्षे) उच्चस्थानम्. ३२ अल्पबुद्धिः; (पक्षे) अल्पपरिमाणः. ३३ अम्बुकणसमुदायः. ३४ मन्देन. ३५ कम्पितः.

पतत्यधः[1] ॥ १४४ ॥ भग्नकुम्भशकलेन[2] वै मलं बालकस्य जननी व्यपोहति। तद्वदोष्ठवदनेन दुर्जनो मातृतः शतगुणाधिको भवेत् ॥ १४५ ॥ अकरुणत्वमकारणविग्रहः[3] परधने परयोषिति च स्पृहा[4]। सुजनबन्धुजनेष्वसहिष्णुता[5] प्रकृतिसिद्धमिदं[6] हि दुरात्मनाम् ॥ १४६ ॥ अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते। विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ १४७ ॥ तथारिभिर्न व्यथते शिलीमुखैर्हतो दिगन्ते हृदये न दूरतः। यथा खलानां कुधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडितः ॥ १४८ ॥ गुणापवादेन तदन्यरोपणाद्भृशाधिरूढस्य समञ्जसं जनम्। द्विधेव कृत्वा हृदयं निगूहतः स्फुरन्नसाधोर्विवृणोति वागसिः ॥ १४९ ॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः। भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥ १५० ॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय। खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ १५१ ॥ सद्वंश[7]जातं गुणकोटि[8]युक्तं धनुः कथं पार्थिववामहस्ते। शरः परप्राणविहारदक्षः सपक्षपातोऽप्यधमो गरीयान् ॥१५२॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोघीकरोति विदुषां निखिलप्रयासम्। एकापि पूर्णमुदरं मधुरैः पदार्थैरालोड्य रेचयति हन्त न मक्षिका किम् ॥ १५३ ॥ हालाहलं खलु पिपासति कौतुकेन कालानलं परिचुचुम्बिषति प्रकामम्। व्यालाधिपं च यतते परिरब्धुमद्धा यो दुर्जनं वशयितुं कुरुते मनीषाम्[10] ॥१५४॥ ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मसदृशामलकाः खलाश्च। नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामपि न त्यजन्ति ॥१५५॥ प्राक्पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति[11] शनैर्विचित्रम्। छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥ १५६ ॥ हित्वा मदं सममसज्जनसज्जनौ तौ वन्दे नितान्तकुटिलप्रगुणस्वभावौ। एकं भिया निरभिसंहितवैरिभावं प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥ १५७ ॥ पादाहतोऽपि दृढदण्डसमाहतोऽपि यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः। हर्षादिवैष पिशुनोऽत्र मनुष्यधर्मा कर्णे परं स्पृशति हन्त्यपरस्य मूलम् ॥ १५८ ॥ उद्भासिताखिलखलस्य[12] विशृङ्खलस्य[13] प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः। दैवादवाप्तविभवस्य गुणद्विषोऽस्य नीचस्य गोचरगतैः सुखमाप्यते कैः ॥ १५९ ॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः। दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥ १६० ॥ कस्तूरिकां तृणभुजामटवी[14]मृगाणां निक्षिप्य नाभिषु चकार च तान्वधार्हान्। मूढो विधिः सकलदुर्जनलोलजिह्वामूले स्म निक्षिपति चेत्सकलोपकारः ॥ १६१ ॥ बिसमलमशनाय स्वादु पा-

---

१ उत्कर्षाद्धीयते; (पक्षे) अधोदेशे पतति. २ भिन्नशरावखण्डेन. ३ निरर्थकविरोधः. ४ इच्छा. ५ असहनशीलता. ६ स्वभावसिद्धम्. ७ वेणु; (पक्षे) कुलम्. ८ मौर्वी; (पक्षे) विद्याविनयादि. ९ अग्रम्; (पक्षे) सख्याविशेषः. १० मतिम्. ११ शब्दं करोति. १२ आविष्कृतसकलदुष्टस्य. १३ अमर्यादस्य. १४ वनम्.

नाय तोयं शयनमवनिपृष्ठे वल्कले वाससी च । नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ १६२ ॥ मलयभुवि विरूढश्चन्दनेनाभिवृद्धो न भजति किल वेणुः सौरभं चन्दनस्य । तदिह नहि विचित्रं सर्वदोषाकराणां नहि भवति खलानां साधुतागन्धलेशः ॥ १६३ ॥ दिगन्ते खेलन्ती सरसहृदयानन्दजननी मया नीता दुष्टप्रचुरनगरीं कापि कविता । अकस्मादुन्मीलत्खलवदनवल्मीकरसनाभुजंगीदष्टाङ्गी शिवशिव समाप्तिं गतवती ॥ १६४ ॥ अभूदम्भोराशेः सह वसतिरासीत्कमलया गुणानामाधारो नयनफलमिन्दुः प्रथयति । कथं सिंहीसूनुस्तमपि तुदति प्रौढदशनैर्गुणानामास्वादं पिशुनरसना किं रसयति ॥ १६५ ॥ न विषममृतं कर्तुं शक्यं प्रयत्नशतैरपि त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोहृदे । गुणपरिचितामार्यां वाणीं न जल्पति दुर्जनश्चिरमपि बलाध्माते लोहे कुतः कनकाकृतिः ॥ १६६ ॥ यदि परगुणा न क्षम्यन्ते यतस्व तदर्जने न हि परयशो निन्दाव्याजैरलं परिमार्जितुम् । विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिनकरकरान्पाणिच्छत्रैर्नुदञ्श्रममेष्यसि ॥ १६७ ॥ जिह्मो[1] लोकः कथयति पुरा हन्त हित्वा गुणौघानम्भःक्षारं गुणगणनिधेस्तस्य रत्नाकरस्य । विश्वे छिद्रानुसरणसमारूढसर्वेन्द्रियाणां दोषे दृष्टिः पिशुनमनसां नानुरागो गुणेषु ॥ १६८ ॥ सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः[2] सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा । अव्युत्पन्नमतिः[3] कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः[4] ॥ १६९ ॥ या लोभात्संविधे[5] खलस्य सुरसा वाणी बुधैर्नीयते नो जानाति स तामचेतनतया सैव स्वयं लीयते । भर्तुः स्नेहचयात्प्रविश्य दहने भस्मीभवत्यङ्गना गाढालिङ्गनतत्परेण मनसा प्रेतो न वेत्ति प्रियाम् ॥ १७० ॥ नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते । ईर्ष्यावेशकषायिते हृदि घृणालेशोऽपि न स्पृश्यते किं त्वेकः प्रवदन्समञ्जसमपि प्राज्ञः शठैर्हस्यते ॥ १७१ ॥ दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः । अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः[6] को नामायमपूर्वनाटकविधिर्यैः शिक्षितो दुर्जनैः ॥ १७२ ॥ जाड्यं ह्रीमति[7] गण्यते व्रतरुचौ[8] दम्भः शुचौ कैतवं[9] शूरे निर्घृणता[10] मुनौ[11] विमतिता दैन्यं[12] प्रियालापिनि । तेजस्विन्यवलिप्तता[13] मुखरता[14] वक्तर्यशक्तिः स्थिरे तत्को नाम गुणो भवेत्स गुणिनां यो दुर्जनैर्नाङ्कितः ॥ १७३ ॥ पोतो[15] दुस्तरवारिराशितरणे दीपोऽन्धकारागमे निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः[16] । इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः[17] ॥ १७४ ॥ धातस्तात तवैव दूषणमिदं यन्नाम कस्तूरिका

---

१ कुटिलः. २ स्वेच्छाचरणनिरोधो येषां ते. ३ अनिपुणमतिः. ४ नीच.. ५ अन्तिके. ६ कपटपटुः. ७ लज्जावति. ८ व्रतेषु रुचि' प्रीतिर्यस्य तास्मिन्. ९ शाठ्यम्. १० निर्दयता. ११ मनन-शीले. १२ दीनत्वम्. १३ सगर्वता. १४ वाचालत्वम्. १५ नौका. १६ अङ्कुशः. १७ भग्नप्रयत्नः.

कान्तारान्तरचारिणां[1] तृणभुजां यन्नाभिमूले कृता । यद्येवं पिशुनस्य[2] हन्त रसनामूले[3]ऽकरिष्यस्तदा प्रायासेन[4] विनाभविष्यदतुला कीर्तिश्च निर्दोषता ॥ १७५ ॥ ते वै सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परोपकारनिरताः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ १७६ ॥ नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति । किंचित्क्वापि न साहसं वितनुते देहे चिरं दूयते नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥ १७७ ॥ वक्रत्वं ननु कुन्तलादिव मुखे तैक्ष्ण्यं कटाक्षादिव क्रूरत्वं कुचमण्डलादिव सुनैर्घृण्यं स्वचित्तादिव । मालिन्यं नयनाञ्जनादिव किलाधैर्यं स्वभावादिव स्वैरन्यैव सुशिक्षितोऽसि खल किं जातोऽस्यतोऽरुंतुदः ॥ १७८ ॥ वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः । तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकैर्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ १७९ ॥ कस्त्वं भद्र खलेश्वरो[5]ऽहमिह किं घोरे वने स्थीयते शार्दूलादिभि[6]रेव हिंस्रपशुभिः[7] खाद्यो[8]ऽहमित्याशया । कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान्नरान् ॥ १८० ॥ भिक्षो मांसनिषेवणं किमुचितं किं तेन मद्यं विना मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह । वेश्या द्रव्यरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा चौर्यद्यूतपरिग्रहोऽपि भवतो भ्रष्टस्य कान्या गतिः ॥ १८१ ॥ भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यांस्ते वै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम् । दत्त्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्तास्मि येषां चोरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥ १८२ ॥ दैवादप्युत्तमानामपहरति यदा दुर्जनो वा कथंचिन्मानं नाप्नोति तेषामनुजनितगुणानेव कुत्राधिकत्वम् । स्वर्भानुर्भानवीयान्हरति यदि पुनः शीतरश्मेर्मरीचीन्ब्रह्माण्डस्येह खण्डे तदपि नरपते किं ग्रहेशात्वमेति ॥ १८३ ॥ हे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियद्भो विशालं किं मद्धाम्नोऽपि बाढं तदतिविपुलतां पाप मा ब्रूहि मिथ्या । इत्थं कूपोदकस्थः शपति तटगतं दर्दुरो राजहंसं नीचः प्रायः शठार्थो भवति हि विषमो नापराधेन दुष्टः ॥ १८४ ॥

---

## लक्ष्मीस्वभावः ।

या स्वसद्मनि पद्मेऽपि संध्यावधि[9] विजृम्भते[10] । इन्दिरा[11] मन्दिरेऽन्येषां कथं स्थास्यति निश्चला[12] ॥ १ ॥ गुणिनं जनमालोक्य निजबन्धनशङ्कया । राजलक्ष्मीः कुरङ्गीव[13] दूरं दूरं

---

१ दुर्गममार्गसंचारिणाम्. २ सूचकस्य. ३ जिह्वामूले. ४ प्रकृष्टेन यत्नेन. ५ खलराज.. ६ व्याघ्रादिभिः. ७ घातकपशुभिः. ८ भक्षणीयः. ९ सध्याकालपर्यन्तम्. १० विराजते. ११ लक्ष्मीः. १२ स्थिरा. १३ मृगीव.

पलायते ॥ २ ॥ शूरं त्यजामि वैधव्यादुदारं लज्जया पुनः । सापत्न्यात्पण्डितमपि तस्मात्कृपणमाश्रये ॥ ३ ॥ गोभिः क्रीडितवान्कृष्ण इति गोसमबुद्धिभिः । क्रीडत्यद्यापि सा लक्ष्मीरहो देवी पतिव्रता ॥ ४ ॥ अत्यार्यमतिदातारमतिशूरमतिव्रतम् । प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ५ ॥ अनागतविधातारमप्रमत्तमकोपनम् । स्थिरारम्भमदीनं च नासौ श्रीरुपतिष्ठते ॥ ६ ॥ मन्ये सत्यमहं लक्ष्मीः समुद्राद्धूलिरुत्थिता । पश्यन्तोऽपि न पश्यन्ति सन्तो विह्वललोचनाः ॥ ७ ॥ समायाति यदा लक्ष्मीर्नारिकेलफलाम्बुवत् । विनिर्याति यदा लक्ष्मीर्गजभुक्तकपित्थवत् ॥ ८ ॥ लक्ष्मीर्यादोनिधे[1]र्यादो[2] नादो[3] वादोचितं वचः । बिभेति [4]धीवरेभ्यो या [5]जडेष्वेव [6]निमज्जति ॥ ९ ॥ कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र । प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥ १० ॥ [7]अव्यवसायिनमलसं [8]दैवपरं साहसाच्च परिहीनम् । [9]प्रमदा पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुम् ॥ ११ ॥ गुणवद्भिः सह संगममुच्चैःपदमाप्तुमुत्सुका लक्ष्मीः । वीर[10]करवालवसतिर्ध्रुवमसिधाराव्रतं चरति ॥ १२ ॥ श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् । उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ १३ ॥ वाक्चक्षुःश्रोत्रलयं लक्ष्मीः कुरुते नरस्य को दोषः । गरलसहोदरजाता तच्चित्रं यन्न मारयति ॥ १४ ॥ अनुभवत ददत वित्तं मान्यान्मानयत सज्जनान्भजत । अतिपरुषपवनविलुलितदीपशिखाचञ्चला लक्ष्मीः ॥ १५ ॥ रत्नाकरतनुजनुषि द्विजराजे राजनि श्रियो मित्रे । अमृतकरे च कलावति पद्मनि वा सा कुतो भवति ॥ १६ ॥ पूरयति पूर्णमेषां तरङ्गिणीसंहतिः समुद्रमिव । लक्ष्मीरधनस्य पुनर्लोचनमार्गेऽपि नायाति ॥ १७ ॥ सुव्यवसायिनि शूरे क्लेशसहिष्णावनाकुलारम्भे । मयि पृष्ठतो विलग्ने यास्यसि कमले कियद्दूरम् ॥ १८ ॥ अपि दोर्भ्यां परिबद्धा बद्धापि गुणैरनेकधा निपुणैः । निर्गच्छति क्षणादिव जलधिजलोत्पत्तिपिच्छला लक्ष्मीः ॥ १९ ॥ हरिभामिनि सिन्धुसंभवे कमले किं कथयामि ते गुणान् । अनुरज्यसि हा जडे जने गुणगौरे पुरुषे विरज्यसि ॥ २० ॥ वीक्षितानि तव वारिधिकन्ये यत्र पालितजगन्ति लगन्ति । चित्रमत्र च परत्र च देही देहिशब्दमपहाय चकास्ति ॥ २१ ॥ यद्वदन्ति चपलेत्यपवादं नैव दूषणमिदं [11]कमलायाः । दूषणं जलनिधेर्हि भवेत्तद्यत्[12]पुराणपुरुषाय ददौ ताम् ॥ २२ ॥ चाञ्चल्यमुच्चैःश्रवसस्तुरंगात्कौटिल्यमिन्दोर्विषतो विमोहः । इति श्रियाशिक्षि सहोदरेभ्यो न वेद्मि कस्माद्गुणवद्विरोधः ॥ २३ ॥ श्वश्रूं विना वृत्तिरिह स्वतन्त्रा प्रायः स्नुषाणामपवादहेतुः । यद्वाणि लोके रमया विहीनां सतीमपि त्वामसतीं वदन्ति ॥ २४ ॥ उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् । शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति

---

१ समुद्रस्य. २ जलजन्तु. ३ अदो वचो वादोचित न. ४ कैवर्तेभ्य; (पक्षे) बुद्धिश्रेष्ठेभ्यः. ५ मूर्खेषु; (पक्षे डलयो. सावर्ण्यात्) उदकेषु. ६ अन्तर्गच्छति; (पक्षे) सुस्थिरं तिष्ठति. ७ अनुद्योगिनम्. ८ नियतिपरम्. ९ तरुणस्त्री. १० खड्गः. ११ लक्ष्म्याः. १२ नारायणाय; (पक्षे) वृद्धाय.

निवासहेतोः ॥ २५ ॥ [1]हालाहलो नैव विषं विषं [2]रमा जनाः परं [3]व्यत्ययमत्र मन्वते । निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः ॥ २६ ॥ तापापहे सुहृदये रुचिरे प्रबुद्धे मित्रानुरागनिरते धृतसद्गुणौघे । स्वाङ्गप्रदानपरिपूरितषट्पदौघे युक्तं तवेह कमले कमले स्थितिर्यत् ॥ २७ ॥ रत्नाकरस्तव पिता कमले निवासो भ्राता [4]सु-धामयतनुः [5]पतिरादिदेवः । केनापरेण कमले बत शिक्षितानि सारङ्गशृङ्गकुटिलानि विचे-ष्टितानि ॥ २८ ॥ लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्तमन्धीभवन्ति पुरुषास्त्वदुपासनेन । नो चेत्कथं कमलपत्रविशालनेत्रो नारायणः स्वपिति [6]पन्नग[7]भोगै[8]स्तल्पे ॥ २९ ॥ [9]असौभाग्यं धत्ते परमसुखभोगास्पदमयं [10]विचित्रं तद्गेहं भवति पृथुकार्तस्वरमयम् । निविष्टः पल्यङ्के कलयति स [11]कान्तारतरणं प्रसादं कोपं वा जननि भवती यत्र तनुते ॥ ३० ॥ समुद्र-स्यापत्यं प्रथितमहिमामुद्रितभुवः स्वसा [12]शौलेयांशोस्त्रिनयनशिरोधामवसतेः । मुरारेर्योषित्सा सरसिरुहकिञ्जल्कनिलया तथापि श्रीः स्त्रीत्वात्प्रकृतिचपलालिङ्गति खलान् ॥ ३१ ॥ तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते मूर्खान्द्वेष्टि न गच्छति प्रणयिता-मत्यन्तविद्वत्स्वपि । शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनपि श्रीर्लब्धप्रसरेव वेश-वनिता दुःखोपचर्या भृशम् ॥ ३२ ॥ कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे । यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ३३ ॥ पद्मे मूढजने ददासि द्र-विणं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः । मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ ३४ ॥ तिर्यक्त्वं भजतु प्रतारयतु वा धर्मक्रियाकोविदं हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां वधूमुज्झतु । वेदान्निन्दतु वा हिनस्तु जनतां किं वानया चिन्तया लक्ष्मीर्यस्य गृहे स एव भजति प्रायो जगद्वन्द्यताम् ॥ ३५ ॥ आलस्यं स्थिरतामुपैति भजते चापल्य-मुद्योगितां मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम् । पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ ३६ ॥ हे लक्ष्मि क्षणिके स्वभावचपले मूढे च पापेऽधमे न त्वं चोत्तमपात्रमिच्छसि खले प्रायेण दुश्चा-रिणि । ये देवार्चनसत्यशौचनिरता ये चापि धर्मे रतास्तेभ्यो लज्जसि निर्दये गतमति-

---

१ विषभेदः. २ लक्ष्मीः. ३ विपरीतभावम्. ४ चन्द्रः. ५ नारायणः. ६ सर्पः. ७ शरीरम्. ८ शय्यायाम्. ९ हे जननि, भवती यत्र यस्मिन्पुरुषे प्रसादं तनुते करोत्यसौ पुरुषो भाग्यमैश्वर्यं धत्ते. यत्र कोपं तनुते सोऽसौभाग्यं सौभाग्याभावं धत्ते. अथ प्रसादविषये परमसुखभोगानामास्पदम्. अथ कोपविषये परमत्यन्तमसुखभोगास्पदम्. भवतीति शेषः. १० तस्य पूर्वोक्तस्य पुरुषस्य गेहं विविधचित्रयुक्तं तथा पृथु महत्कार्तस्वरं स्वर्णं तन्मयं भवति; (पक्षे) चित्ररहितं तथा पृथुकानां बालानामन्नाद्यभावप्रयुक्तेनार्तस्वरेण प्रचुरम्. ११ स पूर्वोक्तः पुरुषः कान्ताया रतं रमणं तदेव रणयुद्धम्; (पक्षे) कान्तारं दुर्गमारण्यं तत्तरणं कलयति. १२ चन्द्रस्य.

नीचो जनो वल्लभः[1] ॥ ३७ ॥ नाहं दुश्चरिणी न चापि चपला मूर्खो न मे रोचते नो शूरो न च पण्डितो न च शठो हीनाक्षरो नैव च। पूर्वस्मिन्कृतपुण्ययोगविभवो भुङ्क्ते स मे सत्फलं लोकानां किमसह्यता सखि पुनर्दृष्ट्वा परां संपदम् ॥ ३८ ॥ हन्तुर्बन्धुजनान्धनार्थमनघान्[2]गन्तुः परस्त्रीशतं रन्तुर्जन्तुविहिंसकैः[3] सह जनैः संतुष्यतो वञ्चनैः। वक्तुस्तीक्ष्णमयुक्त[4]मेव वचनं पंक्तुमितं[5] चौदनं नित्यं नृत्यसि मन्दिरेषु कमले कैत्यं[6] तवैतन्मतम् ॥ ३९ ॥ यत्राभ्यागतदानमानचरणप्रक्षालनं भोजनं सत्सेवा पितृदेवतार्चनविधिः सत्यं गवां पालनम्। धान्यानामपि संग्रहो न कलहश्चित्तानुरूपा प्रिया हृष्टा प्राह हरिं वसामि कमला तस्मिन्गृहे निश्चला ॥ ४० ॥ येषामन्यकलत्र[7]दर्शनकलाव्युत्पत्तिशून्ये दृशौ मूढं हृच्च परार्थचिन्तनविधौ मिथ्यानभिज्ञं मुखम्। अप्रज्ञातपशून्बुभुक्षितशिशूनब्धोदकैस्ताम्यतस्तेषां लक्ष्मि गृहान्दशापि भयभीतेवेह नो वीक्षसे ॥ ४१ ॥ नो जानाति कुलीनमुत्तमगुणं सत्त्वान्वितं धार्मिकं नाचारप्रवणं न कार्यकुशलं न प्रज्ञयालंकृतम्। नीचं क्रूरमपेतसत्त्वमदयं यस्मादियं सेवते तद्वंशानुगुणं पयोधिसुतया लक्ष्म्या प्रमाणीकृतम् ॥ ४२ ॥ पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन[9] रोषादाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी[10] मे। गेहं[11] मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥ ४३ ॥

---

## धनप्रशंसा।

अहो कनकमाहात्म्यं वक्तुं केनापि शक्यते। नामसाम्यादहो चित्रं धत्तूरोऽपि[12] मदप्रदः ॥ १ ॥ न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो। मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ २ ॥ धनमर्जय काकुत्स्थ धनमूलमिदं जगत्। अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ३ ॥ ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम्। शशिना तुल्यवंशोऽपि निर्धनः परिभूयते[13] ॥ ४ ॥ कुत आगत्य घटते विघट्य क्व नु याति च। न लक्ष्यते गतिश्चित्रा घनस्य च धनस्य च ॥ ५ ॥ स्त्रीरूपं मोहकं पुंसो यून एव भवेत्क्षणम्। कनकं स्त्रीबालवृद्धषण्ढानामपि सर्वदा ॥ ६ ॥ न नरस्य नरो दासो दासश्चार्थस्य भूपते। गौरवं लाघवं वापि धनाधननिबन्धनम् ॥ ७ ॥ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवा[14]न्गुणज्ञः। स एव वक्ता स च दर्शनीयः[15] सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ ८ ॥ त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च। तमर्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके

---

१ प्रियः. २ निष्पापान्. ३ प्राणिविघातकैः. ४ अयोग्यम्. ५ मितंपचम्. कृपणमिति भावः. ६ किंप्रकारकम्. ७ स्त्री. ८ समुद्रः. ९ भृगुणा. १० सरस्वती. ११ कमलम्. १२ 'धत्तूरः कनकाह्वयः' इति कोशः. १३ परिभवं प्राप्नोति. १४ शास्त्रज्ञः. १५ प्रेक्षणीयः.

पुरुषस्य बन्धुः ॥ ९ ॥ बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते । न च्छन्दसा केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फला गुणाः ॥ १० ॥ धनैर्निष्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति । धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ ११ ॥ दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनं धनं धनम् । इत्थमेव निनदः प्रवर्तते किं पुनर्यदि जनः सचेतनः ॥ १२ ॥ त्यक्त्वा युवा स्वयुवतिं सुविलासयोग्यां दूरं विदेशवसतौ निवसन्धनार्थी । रात्र्यागमे स्मरति तां न समेति तस्मात्कान्ताभ्रमादपि वरः कनकभ्रमोऽयम् ॥ १३ ॥ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो मज्जतां शीलं शैलतटात्पतत्वभिजनः संदह्यतां वह्निना । शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ १४ ॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते । अर्थप्रार्थनशङ्कया न कुरुते संभाषणं वै सुहृत्तस्माद्द्रव्यमुपार्जयस्व सुमते द्रव्येण सर्वे वशाः ॥ १५ ॥

---

## धननिन्दा ।

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते । जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरतः ॥ १ ॥ लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् । शेषे धराभरक्रान्ते शेते नारायणः सुखम् ॥ २ ॥ वरं हालाहलं पीतं सद्यःप्राणहरं विषम् । न द्रष्टव्यं धनाढ्यस्य भ्रूभङ्गकुटिलं मुखम् ॥ ३ ॥ भक्तद्वेषो जडप्रीतिः सुरुचिर्गुरुलङ्घने । मुखे कटुकता नूनं धनिनां ज्वरिणामिव ॥ ४ ॥ आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे पथि । अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ५ ॥ आजन्मानुगतेऽप्यस्मिन्नाले विमुखमम्बुजम् । प्रायेण गुणपूर्णेषु रीतिर्लक्ष्मीवतामियम् ॥ ६ ॥ धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते । लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ ७ ॥ जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु । मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः ॥ ८ ॥ यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि । भक्ष्यते सलिले नक्रैस्तथा सर्वत्र वित्तवान् ॥ ९ ॥ राजतः सलिलादग्नेश्चोरतः स्वजनादपि । भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १० ॥ धनाशया खलीकारः कस्य नाम न जायते । दूरादामिषलोभेन वध्यते खेचरः खगः ॥ ११ ॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति । विकृतयति गात्रयष्टिं संपद्रोगोऽयमद्भुतो राजन् ॥ १२ ॥ लक्ष्म्या परिपू-

---

१ 'धनं धनं धनम्' इत्यनुकरणशब्दः; (पक्षे) वित्तम्. २ मनाक्प्रियम्. ३ भ्रुकुटिमोटनेन वक्रम्. ४ भक्ताः सेवकास्तेषां द्वेषः; (पक्षे) भक्तमन्न तद्द्वेष. ५ जडेषु मूर्खेषु प्रीतिः; (पक्षे डलयोः सावर्ण्यात्) जले रुचि.. ६ गुरूणां पित्रादीनामुल्लङ्घने; (पक्षे) गुरु यल्लङ्घनमुपवासस्तस्मिन्. ७ कटुभाषित्वम्; (पक्षे) कटुत्वम्. ८ अविषमे. ९ आकाशे चरन्नपि. १० विलक्षणः.

र्णोऽहं न भयं मेऽस्तीति मोहनिद्रैषा । परिपूर्णस्यैवेन्दोर्भवति भयं [1]सिंहिकासूनोः ॥ १३ ॥ [2]अर्जुनीयति यदर्जने जनो वर्जनीयजन[3]तर्जनादिभिः । [4]मङ्क्षु नश्यति चिराय संचिता वञ्चिता जगति के न संपदा ॥ १४ ॥ वरमसिधारा तरुतलवासो वरमिह भिक्षा वरमुपवासः । वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥ १५ ॥ तानीन्द्रियाण्य[5]विकलानि मनस्तदेव सा बुद्धिर[6]प्रतिहता वचनं तदेव । [7]अर्थोष्मणा विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥ १६ ॥ [8]आपद्गतं हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम् । एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः ॥ १७ ॥ धनमपि परदत्तं दुःखमौचित्यभाजां भवति हृदि तदेवानन्दकारीतरेषाम् । मलयजरसबिन्दुर्बाधते न प्रसन्नं नयति च रसवाहादेवमत्यन्तमत्र ॥ १८ ॥ लभेद्यद[9]युतं धनं तदधनं धनं यद्यपि लभेत [10]नियुतं धनं निधनमेव तज्जायते । तथा [11]धनपरार्धकं तदपि भावहीनात्मकं [12]यदक्षरपदद्वयान्तरगतं धनं तद्धनम् ॥ १९ ॥ दायादाः स्पृहयन्ति तस्करगणा [13]मुष्णन्ति भूमीभुजो दूरेण [14]छलमाकलय्य [15]हुतभुग्भस्मीकरोति क्षणात् । अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ति ध्रुवं [16]दुर्वृत्तास्तनया नयन्ति [17]निधनं धिग्धिग्धनं तद्बहु ॥ २० ॥

---

## धनिप्रशंसा ।

धनवान्बलवाँल्लोके सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ १ ॥ वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किंकराः ॥ २ ॥ न सा विद्या न तच्छीलं न दानं न च सा कला । अर्थार्थिभिर्न तच्छौर्यं धनिनां यन्न कीर्त्यते ॥ ३ ॥ पतन्ति खड्गधारासु विशन्ति [18]मकरालयम् । किं न कुर्वन्ति सुभगे कष्टमर्थार्थिनो नराः ॥ ४ ॥ एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर । एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ५ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ ६ ॥ को नाम नानुवृत्तिं सुमहानपि धनवतः कुरुते । वित्तेशभवनभित्तेः समीपमुपसेवते शंभुः ॥ ७ ॥ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य । अप्य[19]तिपरुषमसत्यं पूज्यं वाक्यं समृद्धस्य ॥ ८ ॥ वैभवभाजां

---

१ राहोः. २ सहस्रबाहुवदाचरति ३ भयत्रासादिभिः. ४ झटिति. ५ वैकल्यरहितानि. ६ अखण्डिता. ७ द्रव्यरूपोष्णतया. ८ विपद्ग्रस्तम् ९ दशसहस्रम्; (पक्षे) अकारेण युत धनम्. अधनमित्यर्थः. १० लक्षसख्याकम्; (पक्षे) निशब्देन युत धनम्. निधनमित्यर्थः. ११ धनस्य परार्ध सख्याविशेष; (पक्षे) धनशब्दसंबन्धि परमर्ध 'न' इति तच्च भावहीनात्मकम्. अभावबोधकमित्यर्थः. १२ अक्षरः परमात्मा तच्चरणद्वयान्तरे गत प्राप्त यद्धन मोक्षरूपं धन तदेव धनम्; (पक्षे) अक्षरयो. पकारदकारात्मकयोर्मध्यवर्ति धन इत्येतदक्षरद्वयरूपम्. धनामित्यर्थः. १३ हरन्ति. १४ कपटम्. १५ अग्निः. १६ दुष्टाचरणाः. १७ नाशम्. १८ समुद्रम्. १९ अतिकठोरम्.

दूषणमपि भूषणपक्ष एव निक्षिप्तम्। गुणमात्मनामधर्मं द्वेषं च गृणन्ति काणादाः[1] ॥ ९ ॥ वाणी दरिद्रस्य शुभा[2] हितापि ह्यर्थेन शब्देन च संप्रयुक्ता। न शोभते वित्तवतः समीपे भेरीनिनादोपहतेव[3] वीणा ॥ १० ॥ यादृशि तादृशि वित्तसनाथे पञ्च पिशाचशतानि वसन्ति। यानि पुनर्निवसन्ति महीशे तानि न केनचिदाकलितानि ॥ ११ ॥ न विद्यया नैव कुलेन गौरवं जनानुरागो धनिकेषु सर्वदा। कपालिना[4] मौलिधृतापि[5] जाह्नवी प्रयाति रत्नाकरमेव सत्वरम् ॥ १२ ॥ गङ्गां च धारयति मूर्ध्नि सदा कपाली सा तस्य चुम्बति मुखं न कदाचिदेव। रत्नाकरं प्रति चुचुम्ब सहस्रवक्त्रैर्गङ्गादयो युवतयः सधनानुकूलाः ॥ १३ ॥ धिगस्त्वेतां विद्यां धिगपि कवितां धिक्सुजनतां वयो रूपं धिग्धिग्धिगपि च यशो निर्धनवतः। असौ जीयादेकः सकलगुणहीनोऽपि धनवान्बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ॥ १४ ॥ परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम्। अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥ १५ ॥

---

## दरिद्रनिन्दा।

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः। बालवैधव्यदग्धानां कुलस्त्रीणां कुचाविव ॥ १ ॥ हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः। पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ २ ॥ इह लोकेऽपि धनिनां परोऽपि स्वजनायते। स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ॥ ३ ॥ परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम्। विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ४ ॥ येनैवाम्बरखण्डेन[6] संवीतो निशि चन्द्रमाः। तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ ५ ॥ चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह। चाण्डालोऽपि दरिद्रोऽपि सर्वकर्मसु निन्दितः ॥ ६ ॥ अधन तु विहीनस्य पुरुषस्याल्पमेधसः। क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥ ७ ॥ द्वाविमावम्भसि क्षेप्यौ गाढं बद्ध्वा गले शिलाम्। धनिनं चाप्रदातारं दरिद्रं चातपस्विनम् ॥ ८ ॥ अत्यन्तविमुखे[7] दैवे व्यर्थे यत्ने च पौरुषे। मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥ ९ ॥ दूये[8] कान्ताकरं वीक्ष्य मणिकङ्कणवर्जितम्[9]। अतः परं[10] परं दूये मणिकं[11] कणवर्जितम्[12] ॥ १० ॥ रात्रौ जानुर्दिवा भानुः कृशानुः[13] संध्ययोर्द्वयोः। पश्य शीतं मया नीतं जानुभानुकृशानुभिः ॥ ११ ॥ किं करोमि क्व गच्छामि कमुपैमि दुरात्मना। दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः ॥ १२ ॥ दुःखं दुःखमिति ब्रूयान्मानवो नरकं प्रति। दारिद्र्यादधिकं दुःखं न भूतं न भविष्यति ॥ १३ ॥

---

१ वैशेषिकशास्त्रप्रवर्तकाः. २ कल्याणी. ३ दुन्दुभिध्वनिलुप्तेव. ४ शंकरेण. ५ मस्तक.. ६ आकाशम्; (पक्षे) वस्त्रम्. ७ पराङ्मुखे. ८ खेदं प्राप्नोमि. ९ मणियुक्तं यत्कंकणं तेन वर्जितम्. १० अत्यन्तम्. ११ मृण्मयपात्रम्. १२ धान्यकणरहितम्. १३ अग्निः.

किं चान्यैः सुकुलाचारैः सेव्यतामेति पुरुषः । धनहीनः स्वपत्नीभिस्त्यज्यते किं पुनः परैः ॥ १४ ॥ किं वाच्यं सूर्यशशिनोर्दारिद्र्यं महतां पुरः । दिनरात्रिविभागेन परिधत्तो यदम्बरम्[1] ॥ १५ ॥ शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् । मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ १६ ॥ पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् । सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च[2] ॥ १७ ॥ अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया । अहमपि न तया न तया वद राजन्कस्य दोषोऽयम् ॥ १८ ॥ पृथुकार्तस्वरपात्रं[3] भूषितनिःशेषपरिजनं[4] देव । विलसत्करेणुगहनं[5] संप्रति सममावयोः सदनम्[6] ॥ १९ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् । अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ २० ॥ दारिद्र्य भोस्त्वं परमं विवेकि[7] गुणाधिके पुंसि सदानुरक्तम् । विद्याविहीने गुणवर्जिते च मुहूर्तमात्रं न रतिं[8] करोषि ॥ २१ ॥ दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा[9] । विपन्नदेहे[10] मयि मन्दभाग्ये[11] ममेति चिन्ता क्व गमिष्यसि त्वम् ॥ २२ ॥ एको हि दोषो गुणसंनिपाते[12] निमज्जतीन्दोरिति यो[13] बभाषे । न तेन दृष्टं कविना समस्तं दारिद्र्यमेकं गुणकोटिहारि[14] ॥ २३ ॥ धनैर्विमुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् । यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति ॥ २४ ॥ अहो नु कष्टं सततं प्रवासस्ततोऽतिकष्टः परगेहवासः[15] । कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ २५ ॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयः पत्रफलाम्बुभोजनम् । तृणानि शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ २६ ॥ यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते । तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥ २७ ॥ अर्था न सन्ति न च मुञ्चन्ति मां दुराशा त्यागे रतिं वहति दुर्ललितं मनो मे । याच्ञा हि लाघवकरी[16] स्ववधे च पापं प्राणाः स्वयं व्रजत किं प्रविलम्बितेन[17] ॥ २८ ॥ धनं यदि गतं गतं चरणयुग्मरेणूपमं धरा यदि गता गता कथय मे किमेतावता । इदं पुनररुंतुदं[18] धनिगणैरिदानींतनैर्दरिद्रगणनाविधौ यदहमङ्कपाते धृतः ॥ २९ ॥ निवासश्चिन्तायाः परपरिभवो वैरमपरं जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् । वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ ३० ॥ अये लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी

---

१ आकाशम्; (पक्षे) वस्त्रम्. २ दरिद्रस्येत्यर्थः. ३ पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि यस्मिंस्तत; (पक्षे) पृथुकानां बालानामार्तस्वरा रुदितशब्दास्तेषां पात्रं भाजनम्. ४ भूषिता अलंकृता निःशेषाः परिजना यस्मिन्; (पक्षे) भुवि उषिता निःशेषाः परिजना यस्मिन्. ५ विलसन्त्यः शोभमानाः करेणवो हस्तिन्यस्ताभिर्गहनं निबिडम्; (पक्षे बवयोः सावर्ण्यात्) बिले सीदन्तीति बिलसदः. बिलसद एव बिलसत्का बिलवर्तिनो ये रेणवो धूलयस्तैर्गहनं व्याप्तम्. ६ गृहम्. ७ विचारशीलम्. ८ प्रीतिम्. ९ स्थित्वा. १० विनष्टशरीरे. ११ हतभाग्ये. १२ गुणसमुदाये. १३ कालिदासः. 'एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति कुमारसंभवस्थे पद्ये. १४ कोटिगुणनाशकमिति भावः. १५ परगृहवास. १६ लघुत्वकारिणी. १७ कालदैर्घ्येणेति यावत्. १८ मर्मस्पृक्.

शिशोः कर्णौ यत्नात्[1]सुपिहितवती दीनवदना। मयि क्षीणोपाये यदकृत दृशावश्रुशबले तदन्तःशल्यं मे त्वमिह पुनरुद्धर्तुमुचितः॥ ३१॥ विधातुर्द्वे कन्ये सुगतिरपरा दुर्गतिरभूत्तयोराद्यां धाता गुणकुलविहीनाय स ददौ। ततः पश्चात्तापादिव सुगुणसञ्जातमधुना कुलीनं विद्वांसं वरमिह वरेण्यं मृगयते॥ ३२॥ न भिक्षा दुर्भिक्षे मिलति दुरवस्थाः कथमृणं लभन्ते कर्माणि द्विजपरिवृढान्कारयतु कः। अदत्त्वैव ग्रासं ग्रहपतिरसावस्तमयते क्व यामः किं कुर्मो गृहिणि गहनो जीवनविधिः॥ ३३॥ [2]मा रोदीश्चिरमेहि वस्त्ररहितान्दृष्ट्वाद्य बालानिमानायातस्तव वत्स दास्यति पिता [3]ग्रैवेयकं [4]वाससी। श्रुत्वैवं गृहिणीवचांसि निकटे [5]कुड्यस्य [6]निष्किंचनो निःश्वस्याश्रुजलप्लवप्लुतमुखः पान्थः पुनः प्रस्थितः॥ ३४॥ कन्थाखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं रिक्तं भूतलमत्र नाथ भवतः पृष्ठे [7]पलालोच्चयः। दंपत्योरिति जल्पतोर्निशि यदा चोरः प्रविष्टस्तदा लब्धं [8]कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः॥ ३५॥ वृद्धोऽन्धः पतिरेष [9]मञ्चकगतः [10]स्थूणावशेषं गृहं कालोऽ[11]भ्यर्णजलागमः कुशलिनी वत्सस्य वार्तापि नो। यत्नात्संचिततैलबिन्दुघटिका भग्नेति [12]पर्याकुला दृष्ट्वा गर्भभरालसां [13]निजवधूं श्वश्रूश्चिरं रोदिति॥ ३६॥ नो सेवा विहिता गुरोरपि मनाङ्नो वा कृतं पूजनं देवानां विधिवन्न वा शिव शिव स्निग्धादयः सेविताः। किं तु त्वच्चरणौ सरस्वति रसादा जन्मनः सेवितौ तस्मान्मां विजहाति सा भगवती शङ्के [14]सपत्नी तव॥ ३७॥ क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा लिप्ता [15]जर्जरकर्करी [16]जतुलवैर्नो मां तथा बाधते। गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकु स्मितं कुप्यन्ती प्रतिवेशिलोकगृहिणी सूचीं यथा याचिता॥ ३८॥ दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः। दग्धः [17]पञ्चशरः पिनाकपतिना तेनाप्ययुक्तं कृतं दारिद्र्यं जनतापकारकमिदं केनापि दग्धं नहि॥ ३९॥ उत्तिष्ठ क्षणमेकम[18]ुद्वह सखे दारिद्र्यभारं मम श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम्। इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने शवो दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः॥ ४०॥ भद्रे वाणि ममानने कुरु दयां वर्णानुपूर्व्या चिरं चेतः स्वास्थ्यमुपैहि याहि करुणे प्रज्ञे स्थिरत्वं व्रज। लज्जे तिष्ठ पराङ्मुखी क्षणमहो तृष्णे पुरः स्थीयतां पापो यावदहं ब्रवीमि धनिनां देहीति दीनं वचः॥ ४१॥ यो गङ्गामतरत्तथैव यमुनां यो नर्मदां [19]शर्मदां का वार्ता सरिदम्बुलङ्घनविधौ यश्चार्णवांस्तीर्णवान्। सोऽस्माकं चिरमास्थितोऽपि सहसा दारिद्र्यनामा सखा त्वद्दानाम्बुसरित्प्रवाहलहरीमग्नो न संभाव्यते॥ ४२॥ दारिद्र्याद्[20]ध्रियमेति [21]ह्रीपरिगतः सत्त्वात्परिभ्रश्यते निःसत्त्वः प-

---

१ छादितवती. २ रोदनं मा कुरु. ३ कण्ठभूषणम्. ४ वस्त्रे. ५ भित्तेः. ६ दरिद्रः. ७ धान्यतृणस्रस्तरः. ८ जीर्णवस्त्रखण्डम्. ९ शय्या. १० गृहस्तम्भः. ११ समीपः. १२ व्याकुला. १३ स्नुषाम्. १४ लक्ष्मीरित्यर्थः. १५ चालनीसदृशः सच्छिद्र' कुम्भ'. १६ लाक्षाखण्डैः. १७ मदनः. १८ धारय. १९ सुखदात्रीम्. २० न दृश्यते. २१ लज्जां प्राप्नोति. २२ लज्जायुक्तः.

रिभूयते परिभवान्निर्वेदमापद्यते । निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ४३ ॥ शीतेनाध्युषितस्य माषशिमिवच्चिन्तार्णवे मज्जतः शान्ताग्नेः स्फुटिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम । निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता तत्पात्रप्रतिपादितेव वसुधा न क्षीयते शर्वरी ॥ ४४ ॥ दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः । सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥ ४५ ॥ सङ्गं नैव हि कश्चिदस्य कुरुते संभाष्यते नादरात्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते । दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ४६ ॥ पौरेभ्यो न भयं न दण्डपतनं त्रासो न वा भूपतेर्निःसङ्गं शयनं निशासु गमनं दुर्गेषु मार्गेषु च । दारिद्र्यं सुखमेव केवलमहो दोषद्वयं वर्तते जाया निन्दति चाङ्ग भोगसमये मुञ्चन्ति वै याचकाः ॥ ४७ ॥ वासश्चर्म विभूषणं शवशिरो भस्माङ्गलेपः सदा ह्येको गौः स च लाङ्गलाद्यकुशलः संपत्तिरेतादृशी । इत्यालोच्य विमुच्य शंकरमगाद्रत्नाकरं जाह्नवी कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥ ४८ ॥ मद्गेहे मुसलीव मूषकवधूर्मूषीव मार्जारिका मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः । इत्यापन्नशिशूनसून्विजहतो दृष्ट्वा तु झिल्लीरवैर्लूता तन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥४९॥ पीठाः कच्छपवत्तरन्ति सलिले संमार्जनी मीनवद्दर्वी सर्पविचेष्टितानि कुरुते संत्रासयन्ती शिशून् । शूर्पार्धावृतमस्तका च गृहिणी भित्तिः प्रपातोन्मुखी रात्रौ पूर्णतडागसंनिभमभूद्राजन्मदीयं गृहम् ॥ ५० ॥ शीलं शातयति श्रुतं शमयति प्रज्ञां निहन्त्यादरं दैन्यं दीपयति क्षमां क्षपयति व्रीडामपि ह्रासयति । तेजो जर्जरयत्यपास्यति मतिं विस्तारयत्यर्थितां पुंसः क्षीणधनस्य किं न कुरुते वैरं कुटुम्बग्रहः ॥ ५१ ॥ दारिद्र्येण समीरितापि बहुशः कण्ठं समालम्बते कण्ठात्कष्टशतैः कथं कथमपि प्राप्नोति जिह्वातलम् । जिह्वाकीलककीलितैव सुदृढं तस्मान्न निर्यात्यसौ वाणी प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥ ५२ ॥

## दानप्रशंसा ।

अनुकूले विधौ देयं यतः पूरयिता हरिः । प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥ १ ॥ यद्ददाति यदश्नाति तदेव धनिनो धनम् । अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥ २ ॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने । तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥ ३ ॥ त्याग एको गुणः श्लाघ्यः किमन्यैर्गुणराशिभिः । त्यागाज्जगति पूज्यन्ते पशुपाषाणपादपाः ॥ ४ ॥ भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ ५ ॥ ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु । इच्छानुरूपो

१ खेदम्. २ स्थानम्. ३ आसनानि. ४ दैवे. ५ पूरणकर्ता.

विभवः कदा कस्य भविष्यति ॥ ६ ॥ गौरवं प्राप्यते दानान्न तु वित्तस्य संचयात् । स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ॥ ७ ॥ दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम् । व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ ८ ॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥ ९ ॥ उपार्जितानां वित्तानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥१०॥ दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते । पुंसां यदि हि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ॥ ११ ॥ किं तया क्रियते लक्ष्म्या या वधूरिव केवला । या न वेश्येव सामान्या पथिकैरपि भुज्यते॥१२॥ आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः । गतिरेकैव वित्तस्य दानमन्या विपत्तयः॥१३॥ दानेन श्लाघ्यतां यान्ति पशुपाषाणपादपाः । दानमेव गुणः श्लाघ्यः किमन्यैर्गुणकोटिभिः ॥ १४ ॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १५ ॥ यो न ददाति न भुङ्क्ते सति विभवे नैव तस्य तद्द्रव्यम् । तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥ १६ ॥ दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः । पश्यामि मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ १७ ॥ मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव । तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥ १८ ॥ प्रापितेन चटुकाकुविडम्बं लम्भितेन बहुयाचनलज्जाम् । अर्थिना यदघमर्जति दाता तन्न लुम्पति विलम्ब्य ददानः ॥ १९ ॥ यत्प्रदेयमुपनीय वदान्यैर्दीयते सलिलमर्थिजनाय । याचनोक्तिविफलत्वविशङ्कात्रासमूर्च्छनचिकित्सितमेतत् ॥ २० ॥ अर्थिने न तृणवद्धनमात्रं किंतु जीवनमपि प्रतिपाद्यम् । एवमाह कुशवज्जलदायी द्रव्यदानविधिरुक्तिविदग्धः ॥ २१ ॥ पङ्कसंकरविगर्हितमर्हं न श्रियः कमलमाश्रयणाय । अर्थिपाणिकमलं विमलं तद्वासवेश्म विदधीत सुधीस्तत् ॥ २२ ॥ दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि । साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत् ॥ २३ ॥ अर्थो विनैवार्थनयोपसीदन्नाल्पोऽपि धीरैरवधीरणीयः । मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहुमन्तुमर्हः ॥ २४ ॥ दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम् । परोऽपि बन्धुत्वमुपैति दानैर्दानं हि सर्वव्यसनानि हन्ति ॥ २५ ॥ तुरगशतसहस्रं गोगजानां च लक्षं कनकरजतपात्रं मेदिनीं सागरान्ताम् । विमलकुलवधूनां कोटिकन्याश्च दद्यान्नहि नहि सममेतैरन्नदानं प्रधानम् ॥ २६ ॥ कामं वाचः कतिचिदफलाः सन्तु लोके कवीनां सन्त्येवान्या मधुरिपुकथा संस्तवात्कामदोग्ध्र्यः । वित्तं कामं भवतु विफलं दत्तमश्रोत्रियेभ्यः पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः ॥ २७ ॥ देयं भो अधने धनं सुकृतिभिर्नो संचितं सर्वदा श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिता । आश्चर्यं मधु दान-

---

१ अनेकोपभोग्या. २ नाश इत्यर्थः. ३ तृणकृतकपटपुरुषः. सस्यरक्षणार्थमुच्चप्रदेशे श्वापदभयहेतुस्तृणादिभिः पुरुषः क्रियत इति प्रसिद्धम्. ४ ऐश्वर्ये. ५ भ्रमरीणाम्. ६ हास्यत्वम्. ७ तिष्ठतीति शेषः.

भोगरहितं नष्टं चिरात्संचितं निर्वेदादिति पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः ॥ २८ ॥

## लोभनिन्दा ।

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च । द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥ १ ॥ लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते । लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ २ ॥ लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते । द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः ॥ ३ ॥ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम् । लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥ ४ ॥ लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् । तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥ ५ ॥ लोभाविष्टो नरो वित्तं वीक्षते न स चापदम् । दुग्धं पश्यति मार्जारो यथा न लगुडाहतिम् ॥ ६ ॥ प्रायेण धनिनामेव धनलोभो निरन्तरम् । पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ७ ॥ लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम् । कार्याकार्यविचारो लोभविमूढस्य नास्त्येव ॥ ८ ॥ सत्यप्रशमतपोभिः शास्त्रधनैः शास्त्रवेदिभिर्विजितः । लोभोऽवटं प्रविष्टः कुटिलं हृदयं किराटीनाम्[1] ॥ ९ ॥ स्नेहोपपन्न इति पूर्णदशाविशेषशाली स्वमात्मनि वसुप्रकरं निधाय । लब्धोदये तमथ गृह्णति पद्मबन्धौ दीपा भवन्ति कलुषा बलवान्हि लोभः ॥ १० ॥ यद्दुर्गामटवीमटन्ति[2] विकटं क्रामन्ति देशान्तरं गाहन्ते गहनं समुद्रमथनक्लेशं कृषिं कुर्वते । सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं सर्पन्ति प्रधनं[4] धनान्धितधियस्तल्लोभविस्फूर्जितम्[5] ॥ ११ ॥

## उदारप्रशंसा ।

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति । अदाता हि धनत्यागी धनं हित्वा हि गच्छति ॥ २ ॥ रक्षन्ति कृपणाः पाणौ द्रव्यं क्रव्यमिवात्मनः[6] । तदेव सन्तः सततमुत्सृजन्ति यथा मलम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्त्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात् ॥ ४ ॥ आकारमात्रे विज्ञाते संपादितमनोरथाः । ते धन्या ये न शृण्वन्ति दीनाः कामार्थिनां गिरः ॥ ५ ॥ कर्णलङ्घिगुणोत्कर्षास्त्यागिनो धन्विनस्तथा । निष्फलान्न विमुञ्चन्ति मार्गणान्[7]संमुखे स्थितान् ॥ ६ ॥ देहि देहीति जल्पन्ति त्यागिनोऽप्यर्थिनोऽपि च । आलोकयन्ति भारः स्यादस्ति नास्तीति न क्वचित् ॥ ७ ॥ युध्यन्ते पक्षिपशवः पठन्ति शुकसारिकाः । दातुं शक्नोति यो वित्तं स शूरः स च पण्डितः ॥ ८ ॥ अयं निजः[8] परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ९ ॥

१ किराटो वणिग्जातिविशेषः. २ गहनाम्. ३ अरण्यम्. ४ युद्धम्. ५ विलासः. ६ मांसम्. ७ बाणान्; (पक्षे) याचकान्. ८ स्वकीयः.

लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः । धन्यो बलिः स येनास्य भिक्षापात्रीकृतः करः ॥ १० ॥ कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ ११ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं[1] त्यक्त्वा पश्य कूपं निषेवते ॥ १२ ॥ सैव परं न विनश्यति तनुरपि[2] या श्रीर्निवेशिता सत्सु। अवशिष्यते हिमांशोः सैव कला या स्थिरा शंभौ ॥ १३ ॥ कियती पञ्चसहस्री कियती लक्षाप्यकोटिरपि कियती । औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ १४ ॥ नाक्षराणि पठता किमपाठि पाठितोऽपि किमु विस्मृत एव । इत्थमर्थिजनसंशयदोलाखेलनां खलु चकार नकारः ॥ १५ ॥

---

## कृपणनिन्दा ।

कृपणेन समो दाता न भूतो न भविष्यति । अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १ ॥ यदर्ज्यते[3] परिक्लेशैरर्जितं यन्न भुज्यते । विभज्यते यदन्ते[4]ऽन्यैः कस्यचिन्मास्तु तद्धनम् ॥ २ ॥ यत्करोत्यरतिं[5] क्लेशं तृष्णां मोहं[6] प्रजागरम् । न तद्धनं कदर्याणां[7] हृदये र्व्याधिरेव सः ॥ ३ ॥ मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा । दुश्चारिणी च हसति स्वपतिं पुत्रवत्सलम् ॥ ४ ॥ त्यागभोगविहीनेन धनेन धनिनो यदि । भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ५ ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै । स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ६ ॥ अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् । आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ ७ ॥ कृपणेन शवेनेव मृतेनापि न दीयते । मांसं वर्धयता तेन काकस्योपकृतिः कृता ॥ ८ ॥ बोधयन्ति न याचन्ते भिक्षां[10]द्वारा गृहे गृहे । दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥ ९ ॥ द्वारं द्वारं रटन्तीह भिक्षुकाः पात्रपाणयः । दर्शयन्त्येव लोकानामदातुः फलमीदृशम् ॥ १० ॥ न दातुं नोपभोक्तुं च शक्नोति कृपणः श्रियम् । किं तु स्पृशति हस्तेन नपुंसक इव स्त्रियम् ॥ ११ ॥ किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः । अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥ १२ ॥ वरं विभवहीनेन प्राणैः संतर्पितोऽनलः । नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥ १३ ॥ उदारचरितस्त्यागी याचितः कृपणोऽधिकः । एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम्[11] ॥१४॥ नोपभोक्तुमपि क्लीबो जानात्युपचितां श्रियम् । ग्राम्यो विरागयत्येव रमयन्नपि कामिनीम् ॥ १५ ॥ कृपणः स्ववधूसङ्गं न करोति भयादिह । भविता यदि मे पुत्रः स मे वित्तं हरेदिति ॥ १६ ॥ यदधोऽधः क्षितौ वित्तं निचखान[12] मितंपचः । तदधोनिरयं[13] गन्तुं चक्रे

---

१ समुद्रम्. २ अल्पा. ३ संपाद्यते. ४ अवसाने. ५ अस्वस्थत्वम्. ६ विचाराशक्तिम्. ७ कृपणानाम्. ८ पीडैव. ९ कस्य का उपकृतिरुपकारः कृता. अपि तु न कस्यापि कापीत्यर्थः; (पक्षे) काकस्य पक्षिणः. १० भिक्षुका इति शेषः. ११ त्यजतीति शेषः. १२ आरोपयामास. १३ नरकम्.

पन्थानमग्रतः ॥ १७ ॥ निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति । परार्थं भारवाहीव क्लेशस्यैव हि भाजनम् ॥ १८ ॥ असंभोगेन सामान्यं कृपणस्य धनं परैः । अस्येदमिति संबन्धो हानौ दुःखेन गम्यते ॥ १९ ॥ सति द्राक्षाफले क्षीरे मृदामास्वादनं मुदे । अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥ २० ॥ अदातुर्मानसं क्वापि न स्पृशन्ति कवेर्गिरः । दोषायैवातिवृद्धस्य विलासास्तरुणीकृताः ॥ २१ ॥ शरणं किं प्रपन्नानि विषवन्मारयन्ति किम् । न त्यजन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ २२ ॥ धनं यदिह मे दत्से विधे मा देहि कर्हिचित् । औदार्यं धनिनो देहि यन्मदीये हृदि स्थितम् ॥ २३ ॥ वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः । व्यसोः कुसुममालेव श्रीः कदर्यस्य निष्फला ॥ २४ ॥ लुब्धो न विसृजत्यर्थं नरो दारिद्र्यशङ्कया । दातापि विसृजत्यर्थं तयैव[1] ननु शङ्कया ॥ २५ ॥ दैववशादुत्पन्ने सति विभवे यस्य नास्ति भोगेच्छा । न च परलोकसमीहा[2] स भवति धनपालको मूर्खः ॥ २६ ॥ उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम् । कन्यामणिरिव[3] सदने तिष्ठत्यर्थः परस्यार्थे ॥ २७ ॥ यदि भवति धनेन धनी क्षितितल[4]निहितेन भोगैर[5]हितेन । तस्माद्वयमपि धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ २८ ॥ नन्दनरेन्द्र[6]द्रविणैर्दुष्कृतमिह किमपि विहितमतिघोरम् । वसुधातलोष्मपाको विरमति नाद्यापि यत्तेभ्यः ॥ २९ ॥ दृढतरनिबद्धमुष्टेः[7] कोशनिषण्णस्य[8] सहजमलिनस्य[9] । कृपणस्य कृपाणस्य च केवलमाकारतो[10] भेदः ॥ ३० ॥ कृपणस्य समृद्धीनां भोक्तारः सन्ति केचिदतिनिपुणाः । जलसंपदोऽम्बुराशे[11]र्यान्ति वशं शश्वदौर्वाग्नेः[12] ॥ ३१ ॥ प्राप्तानपि न लभन्ते भोगान्भोक्तुं स्वकर्मभिः कृपणाः । मुखपाकः[13] किल भवति द्राक्षापाके बलिभुजां[14] हि ॥ ३२ ॥ अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् । योऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ ३३ ॥ केचित्स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते । न तु संत्यजन्ति वित्तं मात्सर्यमिवाधमाः सततम् ॥ ३४ ॥ मेघा इवातिलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः । तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ३५ ॥ अर्थिनि[15] कवयति[16] कवयति पठति च पठति स्तवोद्यते स्तौति । पश्चाद्यामीत्युक्ते कृपणः प्रणतो[17]ऽञ्जलिं कुरुते ॥ ३६ ॥ याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य । तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ३७ ॥ मा धनानि कृपणः खलु जीवंस्तृष्णयार्पयतु जातु परस्मै ।

---

१ दारिद्र्यशङ्कयैव. २ इच्छा. ३ उत्तमकन्या. ४ भूम्यन्तर्गतेन. ५ उपभोगहीनेन. ६ नवनवतिकोटिमिताः कनकदीनाराः पाटलिपुत्रमहीपतिना नन्देन भूमौ निहिता अद्यापि तिष्ठन्तीति प्रसिद्धिः. ७ दृढतरमतिनिबिडं निबद्धा मुष्टिर्येन; (पक्षे) दृढतर निबद्धा मुष्टिस्त्सरुर्यस्य. ८ कोशागारे निषण्णस्य स्थितस्य; (पक्षे) कोशे खड्गपिधाने स्थितस्य. ९ स्वभावमलिनस्य. मलिनवेषत्वात्; (पक्षे) कृष्णवर्णत्वात्. १० आकारत आकृत्या भेदः; (पक्षे) कृपणशब्देऽकारो वर्तते, कृपाणशब्द आकारो वर्तते, एतावतैव भेदो भिन्नत्वम्. कृपाणः खड्गः. ११ समुद्रस्य. १२ वाडवाग्नेः. १३ मुखरोगः. १४ काकानाम्. १५ याचके. १६ कविता करोति. १७ नम्रः.

तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥ ३८ ॥ लोक एष परलोकमुपेता हा विधाय निधने धनमेकः। इत्यमुं खलु तदस्य निनीषत्यर्थिबन्धुरुदयद्दयचित्तः[1] ॥ ३९ ॥ फलं स्वेच्छालभ्यं प्रतिवनमखेदं[2] क्षितिरुहां[3] पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम्। मृदुस्पर्शा शय्या सुललितलता पल्लवमयी सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ ४० ॥ यदेते साधूनामुपरि विमुखाः सन्ति धनिनो न चैषावज्ञैषामपि तु निजवित्तव्ययभयम्। अतः खेदो नास्मिन्परममनुकम्पैव भवति स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः ॥ ४१ ॥ जहाति सहसासनं झटिति[4] पृच्छति स्वागतं नमस्यति कृताञ्जलिः श्रुतिमनोहरं[5] भाषते। ददाति कुसुमं फलं शिथिलयत्यभीष्टां क्रियामहो न परिचीयते कृपणवञ्चनाचातुरी ॥ ४२ ॥ अयश्चणकचर्वणं[6] फणिफणामणेः कर्षणं करेण गिरितोलनं जलनिधेः पदा लङ्घनम्। प्रसुप्तहरिबोधनं[7] निशितखड्गसंस्पर्शनं कदाचिदखिलं भवेन्न च शठाद्धनस्यार्जनम् ॥ ४३ ॥

---

## याचकनिन्दा।

वेपथुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः। मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ १ ॥ विद्यावतः कुलीनस्य धनं याचितुमिच्छतः। कण्ठे पारावतस्येव वाक्करोति गतागतम् ॥ २ ॥ दक्षिणाशाप्रवृत्तस्य[10] प्रसारितकरस्य[11] च। तेजस्तेजस्विनोऽर्कस्य हीयतेऽन्यस्य का कथा ॥ ३ ॥ साधुरेवार्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा। शुष्कोऽपि हि नदीमार्गः खन्यते सलिलार्थिभिः ॥ ४ ॥ तृणादपि लघुस्तूलस्तूलादपि[12] च याचकः। वायुना किं न नीतोऽसौ मामेवं प्रार्थयेदिति ॥ ५ ॥ देहीति वचनं श्रुत्वा देहस्थाः पञ्चदेवताः। मुखान्निर्गत्य गच्छन्ति श्रीह्रीधीधृतिकीर्तयः ॥ ६ ॥ नवीनदीनभावस्य याचकस्यातिमानिनः। वचोजीवितयोरासीत्पुरोनिःसरणे[13] रणः ॥ ७ ॥ अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम्। अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥ ८ ॥ गतेर्भङ्गः स्वरो हीनो गात्रे स्वेदो महद्भयम्। मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ९ ॥ दारिद्र्यानलसंतापः शान्तः संतोषवारिणा। याचकाशाविघातान्तर्दाहः केनोपशाम्यते ॥ १० ॥ दारिद्र्यस्य परा मूर्तिर्याच्ञा न द्रविणाल्पता। अपि कौपीनवाञ्शंभुस्तथापि परमेश्वरः ॥ ११ ॥ वदनाच्च बहिर्यान्ति प्राणा याच्ञाक्षरैः सह। ददामीत्यक्षरैर्दातुः पुनः कर्णाद्विशन्ति हि ॥ १२ ॥ देहीति वक्तुकामस्य यद्दुःखमुपजायते। दाता चेत्तद्विजानीयाद्दद्यात्स्वपिशितान्यपि[14] ॥ १३ ॥ काक

---

१ उद्यत्करुण चित्त यस्य. २ क्लेशरहितम्. ३ वृक्षाणाम्. ४ सत्वरम्. ५ कर्णमधुरम्. ६ लोहम्. ७ निद्रितसिंहोत्थापनम्. ८ तीक्ष्णः. ९ कम्प.. १० दक्षिणदिशायां प्रवर्तमानस्य; (पक्षे) दक्षिणाया आशा तया प्रवृत्तस्य. ११ प्रसारिता विस्तारिता. कराः किरणा येन; (पक्षे) प्रसारितः करो हस्तो येन. १२ कार्पासः. १३ अहमहमिकया अग्रतो निःसरणे. १४ मांसानि.

आह्वयते काकान्याचको न तु याचकान् । काकयाचकयोर्मध्ये वरं काको न याचकः॥१४॥ तीक्ष्णधारेण खड्गेन वरं जिह्वा द्विधा कृता । न तु मानं परित्यज्य देहि देहीति भाषितम् ॥ १५ ॥ पुरतः प्रेरयत्याशा लज्जा पृष्ठावलम्बिनी । ततो लज्जाशयोर्मध्ये दोलायत्यर्थिनां मनः ॥ १६ ॥ [१]करान्प्रसार्य रविणा [२]दक्षिणाशावलम्बिना । न केवलमनेनात्मा दिवसोऽपि लघूकृतः ॥ १७ ॥ एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता । दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १८ ॥ हृदि लज्जोदरे वह्निः स्वभावादग्निरुच्छिखः । तेन मे दग्धलज्जस्य पुनरागमनं नृप ॥ १९ ॥ सेवेव मानमखिलं [३]ज्योत्स्नेव तमो जरेव लावण्यम् । हरिहरकथेव दुरितं गुणशतमप्य[४]र्थिता हरति ॥ २० ॥ याचकवीरो धन्यः [५]करदानग्राहकः स्वदातृभ्यः । कुरुते पराङ्मुखं वा ह्यतिनम्रं वा हरत्यसौ पुण्यम् ॥ २१ ॥ अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि । गणयति न तिरस्कारं दानान्धविलोचनो नीचः ॥ २२ ॥ कतरत्[६]पुरहर परुषं हालाहलकवलयाचनावचसोः । एकैव तव रसज्ञा तदुभयरसतारतम्यज्ञा॥२३॥ अग्रे लघिमा पश्चान्महतापि पिधीयते नहि महिम्ना । वामन इति त्रिविक्रममभिदधति दशावतारविदः ॥ २४ ॥ गुरुतामुपयाति यन्मृतः पुरुषस्तद्विदितं मयाधुना । ननु लाघवहेतुरर्थिता न मृते तिष्ठति सा [७]मनागपि ॥ २५ ॥ याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमेव तथा हि । सद्य एव भगवानपि विष्णुर्वामनो भवति याचितुमिच्छन् ॥ २६ ॥ उत्तमर्णधनदानशङ्कया पावकोत्थशिखया हृदिस्थया । देव दग्धवसना सरस्वती नास्यतो बहिरुपैति लज्जया ॥ २७ ॥ नीचतामनवलम्ब्य जनः को याचनादवचिनोति फलानि । हन्त वामनपदं प्रतिपेदे भिक्षुतामुपगतो जगदीशः ॥ २८ ॥ अन्यतो यदि निजोपचिकीर्षा मानहानिरिति भीतिरनीतिः । श्रीधरोऽपि हि बलेः श्रियमिच्छन्मानमातनुत वामनमेव ॥ २९ ॥ संलापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् । आशावतां श्रद्दधतां च लोके किमर्थिनां वञ्चयितव्यमस्ति ॥ ३० ॥ स्वार्थं धनानि धनिकात्प्रतिगृह्णतो यदास्यं भजेन्मलिनतां किमिदं विचित्रम् । गृह्णन्परार्थमपि वारिनिधेः पयोऽपि मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ३१ ॥ [८]जनस्थाने भ्रान्तं [९]कनकमृगतृष्णाकुलतया वचो [१०]वैदेहीति प्रतिपदमुदश्रु प्रलपितम् । [११]कृतालंकाभर्तुर्वदनपरिपाटीषु घटना मयाप्तं रामत्वं [१२]कुशलवसुता न त्वधिगता

१ किरणान्; (पक्षे) हस्तान्. २ दक्षिणदिक्; (पक्षे) दक्षिणाया आशा स्पृहा. ३ चन्द्रकान्तिः. ४ याचकत्वम्. ५ कराद्धस्ताद्दानस्य ग्राहकः; (पक्षे) करो राजग्राह्यो दण्डस्तस्य दानं समर्पणं तद्ग्राहकः. ६ हे शिव. ७ किंचिदपि. ८ जनानां स्थानानि नगरपत्तनादीनि तेषु भ्रमणं कृतम्; (पक्षे) जनस्थाने नासिकाख्यजनपदे परिभ्रमणं कृतम्. ९ कनकं द्रव्यमेव मृगतृष्णा मरीचिका तया; (पक्षे) कनकस्य मृगो मायारूपधारी मारीचो राक्षसस्तस्य तृष्णा तया. १० वै इति पदच्छेदः. देहीति प्रलपितम्; (पक्षे) वैदेही जानकीति प्रलपितम्. ११ काभर्तुः कुत्सितस्वामिनो वदनपरिपाटीषु घटना अलमत्यर्थं कृता; (पक्षे) लङ्काभर्तू रावणस्य वदनपरिपाट्यामिषुघटना बाणरचना कृता. १२ कुशलं च वसु च द्रव्यं तद्भावो न संपादितः; (पक्षे) कुशलवौ सुतौ यस्याः सा वैदेही न प्राप्ता.

॥ ३२ ॥ क्व गन्तासि भ्रातः कृतवसतयो यत्र धनिनः किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि। धनैर्याच्ञालब्धैर्ननु परिभवोऽभ्यर्थनफलं निकारोऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम् ॥ ३३ ॥ पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि। श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः स्तोतव्यस्त्वं बधिर न गिरं यः खलानां शृणोषि ॥ ३४ ॥ भ्रातर्धातरशेषयाचकजने वैरायसे सर्वथा यस्माद्विक्रमशालिवाहनमहीभृन्मुञ्जभोजादयः। अत्यन्तं चिरजीविनो न विहितास्ते विश्वजीवातवो मार्कण्डिध्रुवलोमशप्रभृतयः सृष्टाः प्रभूतायुषः ॥ ३५ ॥ उड्डीना गुण[1]पत्रिणः सुखफलान्योराद्विकीर्णान्यधः पर्यस्ताः परितो यशःस्तबकिताः संपल्लतापल्लवाः। प्रागेवापसृतप्रमोदहरिणच्छाया कथान्तं गता दैन्या[3]रण्यमतंगजेन सहसा भग्नेऽभिमानद्रुमे ॥ ३६ ॥ शूराः केऽपि पुरःस्थितां रिपुनरश्रेणिं सहन्ते सुखं धीराः केचन कामबाणसदृशां [4]कान्तादृगन्ताहतिम्। केचित्क्रूररवांश्च [5]पञ्चवदनान्दन्तीचपेटान्भटा नैवार्थिप्रकरं प्रसारितकरं कश्चिद्विसोढुं क्षमः ॥ ३७ ॥ दौर्गत्येन समीरिता हृदयतः कण्ठं समालम्बते कण्ठात्कष्टतरं कथं कथमपि प्राप्नोति जिह्वाञ्चलम्। लज्जाकीलककीलितेव निबिडं तस्मान्न निर्यात्यहो वाचा प्राणपरिक्षयेऽपि महतां देहीति नास्तीति च ॥ ३८ ॥ वक्त्रादुद्वस मे हठादधिवस त्वं वाणि वक्त्रं मनागीशानां तदनु क्रुधा भजतु मां लक्ष्मीरिमानुज्झतु। पश्चात्तेषु पठत्सु मां प्रति यशोगाथावलीस्तृष्णया वक्त्रं मय्यथ वक्रयत्यनुभवन्त्वेतेऽपि तद्यातनाम् ॥ ३९ ॥ तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः शूरः सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः। दक्षो धर्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठान्वितो यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ ४० ॥ आस्वाद्य स्वयमेव वच्मि महतीर्मर्मच्छिदो वेदना मा भूत्कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः। पश्य भ्रातरियं हि यौवनजराधिक्कारकेलिस्थली मानम्लानमषी गुणव्यतिकरप्रागल्भ्यगर्वच्युतिः॥ ४१ ॥ प्राणानां बत किं ब्रुवे कठिनतां तैरेव साविष्कृता निष्क्रामन्ति कथंचिदेव हि न ये याच्ञावचोभिः समम्। आत्मानं पुनराक्षिपामि विदितस्थैर्योऽपि येषामहो मिथ्याशङ्कितताद्वियोगविधुरो यत्प्रार्थये सर्वशः ॥ ४२ ॥ वासो वल्कलमास्तरः किसलयान्योकस्तरूणां तलं मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये। क्रीडा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी स्वाधीने विभवे तथापि कृपणा याचन्त इत्यद्भुतम् ॥ ४३ ॥ सन्ति स्वादुफला वनेषु तरवः स्वच्छं पयो नैर्झरं वासो वल्कलमाश्रयो गिरिगुहा शय्या लतावल्लरी। आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह स्वाधीने विभवेऽप्यहो नरपतिं सेवन्त इत्यद्भुतम् ॥ ४४ ॥ निष्कन्दाः किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः किं शुष्काः

१ गुणा एव पक्षिणः. २ समीपे. ३ दैन्यमेवारण्यगजः. ४ कान्ताकटाक्षवेधम्. ५ सिंहान्. ६ गृहम्.

सरितः स्फुरद्भिरिगुरुग्रावस्खलद्वीचयः । प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्वद्भिरुद्वीविभिर्य- द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते ॥ ४५ ॥ कामं जीर्णपलाशसंहतिकृतां कन्थां वसानो वने कुर्यामम्बुभिरप्ययाचितसुखैः प्राणानुबन्धस्थितिम् । साङ्गग्लानि सवेपितं सचकितं सान्तर्निदाघज्वरं वक्तुं न त्वहमुत्सहे सकृपणं देहीति दीनं वचः ॥ ४६ ॥ द्वारे द्वारे परेषामविरलमटति द्वारपालैः करालैर्दृष्टो[1] योऽप्याहतः सन्रणति गणयति स्वाप- मानं तु नैव । क्षन्तुं शक्नोति नान्यं स्वसदृशमितरागारमप्याश्रयन्तं भ्राम्यत्यात्मोदरार्थे कथमहह शुना नो समो याचकः स्यात् ॥ ४७ ॥

## परोपकारप्रशंसा ।

परोपकारः कर्तव्यः प्राणैरपि धनैरपि । परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ १ ॥ धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥ २ ॥ रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः । एते परोपकाराय युगे दैवेन निर्मि- ताः ॥ ३ ॥ तृणं चाहं वरं मन्ये नरादनुपकारिणः । घासो भूत्वा पशून्पाति भीरून्[2]पाति रणाङ्गणे ॥ ४ ॥ परोप[3]कृतिकैवल्ये[4] तोलयित्वा[5] जनार्दनः । गुर्वी[6]मुपकृतिं मत्वा ह्यवतारा[7]- न्दशाग्रहीत्[8] ॥ ५ ॥ आत्मार्थं जीवलोकेऽस्मिन्को न जीवति मानवः । परं परोपकारार्थं[9] यो जीवति स जीवति ॥ ६ ॥ परोपकारशून्यस्य धिङ्मनुष्यस्य जीवितम् । धन्यास्ते पशवो येषां चर्माप्युपकरिष्यति ॥ ७ ॥ रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्र- भवाम् । अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ ८ ॥ कृच्छ्रानुवृत्तयोऽपि हि परोपकारं त्यजन्ति न महान्तः । तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥ ९ ॥ परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः । परोपकाराय दुहन्ति गावः परो- पकारार्थमिदं शरीरम् ॥ १० ॥ भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः। अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ११ ॥ श्रोत्रं[9] श्रुतेनैव[10] न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन । विभाति कायः खलु सज्जनानां परोपकारेण न चन्द- नेन ॥ १२ ॥ पद्माकरं[11] दिनकरो विकचं करोति चन्द्रो विकासयति कैरवचक्रवालम्[12] । ना- भ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहितेषु कृताभियोगाः ॥ १३ ॥ दातुः परोपकृतिनिर्भरचित्तवृत्तेरासन्नदूरगणना नहि संश्रितेषु । भानुर्विकासयति हन्त सरोजखण्डं पाणिस्थपङ्कजसमं भुवनान्तरेषु ॥ १४ ॥

---

१ विकरालैः. २ भीतान्. ३ परोपकार. ४ मोक्ष. ५ उभयोस्तुलनां कृत्वा. ६ श्रेष्ठाम्. ७ मत्स्यादीन्. ८ जग्राह. ९ कर्ण.. १० शास्त्रेण. ११ कासारम्. १२ कुमुदमण्डलम्.

## कृतघ्ननिन्दा।

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा। निष्कृतिर्विहिता लोके कृतघ्ने नास्ति निष्कृतिः ॥ १ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम्। तं जनम[1]सत्यसंधं भगवति वसुधे कथं वहसि ॥ २ ॥ [2]व्योमनि शम्बाकुरुते [3]चित्रं निर्माति यत्नतः सलिले। स्नपयति पवनं सलिलैर्यस्तु खले चरति [4]सत्कारम् ॥ ३ ॥ शोकं मा कुरु [5]कुक्कुर सत्त्वेष्वहमधम इति [6]मुधा साधो। कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ४ ॥

---

## संतोषप्रशंसा।

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम्। कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १ ॥ अकृत्वा परसंतापमगत्वा खलनम्रताम्। अनुत्सृज्य सतां [7]वर्त्म यत्स्वल्पमपि तद्बहु ॥ २ ॥ आगमिष्यन्ति ते भावा ये भावा मयि भाविनः। अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः ॥ ३ ॥ यो मे गर्भगतस्यापि [8]वृत्तिं कल्पितवान्प्रभुः। शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः ॥ ४ ॥ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम्। सुखान्यपि तथायान्ति दैन्यमत्रा[9]तिरिच्यते ॥ ५ ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे। अनृणी चाप्रवासी च स वारिचर मोदते ॥ ६ ॥ आत्माधीनशरीराणां स्वपतां निद्रया स्वया। [10]कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥ ७ ॥ सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम्। [11]उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ ८ ॥ ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः। जगत्संमोहजननी यैराशा[12]शीविषी जिता ॥ ९ ॥ अकिंचनस्य दान्तस्य शान्तस्य समचेतसः। सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १० ॥ न योजनशतं दूरं बाध्यमानस्य तृष्णया। संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥ ११ ॥ अर्थी करोति दैन्यं लब्धार्थो गर्वपरितोषम्। नष्टधनश्च स शोकं सुखमास्ते निःस्पृहः पुरुषः ॥ १२ ॥ तन्मूलं [13]गुरुतायास्तत्सौख्यं तद्यशस्तदौ[14]र्जित्यम्। तत्सौभाग्यं पुंसां यदेतद[15]प्रार्थनं नाम ॥ १३ ॥ सर्पाः पिबन्ति पवनं न च दुर्बलास्ते शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति। कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं संतोष एव पुरुषस्य परं निधानम् ॥ १४ ॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैवा[16]ङ्घ्रिपाः फलभृतः सरितोऽप्यशुष्यन्। रुद्धा गुहाः किम[17]जितोऽवति नोपपन्नान्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ १५ ॥ मन्निन्दया यदि जनः [18]परितोषमेति नन्वप्रयत्नसुलभोऽयम[19]नुग्रहो मे। [20]श्रेयोऽर्थिनोऽपि पुरुषाः [21]परतुष्टि-

---

१ असत्यप्रतिज्ञम्. २ व्योमन्याकाशे शम्बाकुरुते हलेन क्षेत्रं वारद्वय कर्षति. ३ आलेख्यम्. ४ पूजाम्. ५ भषक. ६ व्यर्थम्. ७ मार्गम्. ८ जीवनोपायम्. ९ विशिष्यते. १० कुत्सितमन्नम्. ११ उपानद्भ्यां गूढौ पिहितौ पादौ यस्य. १२ सर्पिणी. १३ गौरवस्य. १४ उत्साहशीलत्वम्. १५ अयाचनम्. १६ वृक्षाः. १७ भगवान्. १८ संतोषम्. १९ प्रसाद. २० कल्याणेच्छवः. २१ अन्यसंतोषः.

हेतोर्दुःखार्जितान्यपि धनानि परित्यजन्ति ॥ १६ ॥ वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः । स हि भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ १७ ॥ गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां तां दृष्ट्वाशु गतः स चन्दनवनं पश्चात्सरोजं गतः । बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः संतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ १८ ॥ मृत्युर्मोद्यति मूर्ध्नि शश्वदुरगी घोरा जरारूपिणी त्वामेषा ग्रसते परिग्रहमयैर्गृध्रैर्जगद्ग्रस्यते । धूत्वा बोधजलैरबोधबहुलं तल्लोभजन्यं रजः संतोषामृतसागराम्भसि चिरं मग्नः सुखं स्थास्यसि ॥ १९ ॥

---

## तृष्णानिन्दा ।

तृष्णे देवि नमस्तुभ्यं धैर्यविल्लवकारिणि । विष्णुस्त्रैलोक्यपूज्योऽपि यत्त्वया वामनीकृतः ॥ १ ॥ तृष्णे कृष्णेऽपि ते शक्तिर्दृष्टा मर्त्येषु का कथा । त्रैलोक्यव्यापि यद्रूपं तद्रूपं वामनीकृतम् ॥ २ ॥ तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ ३ ॥ वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ४ ॥ नास्त्यन्या तृष्णया तुल्या क्वचिदेव नितम्बिनी । या प्राणानपि मुष्णन्ती भवत्येवाधिकं प्रिया ॥ ५ ॥ च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे । पातसज्जमिमं देहं तृष्णा साध्वी न मुञ्चति ॥ ६ ॥ तृष्णे त्वमपि तृष्णान्धा त्रिपु स्थानेषु वर्तसे । व्याधितेष्वनपत्येषु जैरापरिणतेषु च ॥ ७ ॥ तृष्णे देवि नमस्तुभ्यं या त्वं सर्वस्य सर्वदा । उत्पादयस्ययत्नेन गोष्पदे सागरभ्रमम् ॥ ८ ॥ अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् । तृणीकरोति तृष्णैका निमेषेण नरोत्तमम् ॥ ९ ॥ आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ १० ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ ११ ॥ गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् । नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ १२ ॥ आशैव राक्षसी पुंसामाशैव विषमञ्जरी । आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥ १३ ॥ क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः । तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥ १४ ॥ यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् । जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ १५ ॥ यत्र कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १६ ॥ आशाया ये दासास्ते दासाः सर्वलोकस्य । आशा येषां दासी तेषां दासायते लोकः ॥ १७ ॥ दन्ता विश्लथदन्ताः

१ विलयम्. २ ह्रस्वीकृत.. ३ स्त्री. ३ हरन्ती. ५ वृद्धेषु. ६ मेरुसदृशम्; ७ तृणवल्लघूकरोति. ८ पर्वत..

केशाः काशप्रसूनसंकाशाः । नयनं तमसामयनं तथापि चित्तं घनाङ्गनायत्तम् ॥ १८ ॥ त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् । हतहृदयं ह्यधिकाधिकवाञ्छाशत-दुर्भरं न पुनः ॥ १९ ॥ अङ्गं गलितं पलितं [1]मुण्डं [2]दशनविहीनं जातं [3]तुण्डम् । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम् ॥ २० ॥ दिनयामिन्यौ सायंप्रातः शिशिर-वसन्तौ पुनरायातः । कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥ २१ ॥ आ-[4]शावलम्बोपचिता न कस्य तृष्णालतानर्थफलं प्रसूते । दिने दिने लब्धरुचि[5]र्विवस्वान्[6]मीनं च [7]मेषं च [8]वृषं च भुङ्क्ते ॥ २२ ॥ भिक्षाशनं तदपि नीरसमेकवारं शय्या च भूः परि-जनो निजदेहमात्रम् । वस्त्रं सुजीर्णशतखण्डमयी च कन्था हा हा तथापि विषयान्न जहाति चेतः ॥ २३ ॥ गदोदन्ता दन्ताः पलितकलितः कुन्तलभरस्तमःक्षेत्रे नेत्रेऽवि-षयपटुनी नः श्रुतिपुटे । अभूदङ्गं रङ्गद्वलिवलयवल्लीविलुलितं तथाप्येतच्चेतस्तरुण इव धावत्यनुदिनम् ॥ २४ ॥ गतं तत्तारुण्यं तरुणिहृदयानन्दजनकं विशीर्णा दन्तालिर्निज-गतिरहो [9]यष्टिशरणा । जडीभूता दृष्टिः श्रवणरहितं कर्णयुगलं मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ २५ ॥ वपुः कुब्जीभूतं गतिरपि तथा यष्टिशरणा विशीर्णा द-न्तालिः श्रवणविकलं श्रोत्रयुगलम् । शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो मनो मे नि-र्लज्जं तदपि विषयेभ्यः स्पृहयाति ॥ २६ ॥ खलोल्लापाः सोढाः कथमपि तदाराधनतया निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा । कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि त्वमाशे मोघाशे किमु परमितो नर्तयसि माम् ॥ २७ ॥ निवृत्ता भोगेच्छा बहुपुरुषमानो विगलितः समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः । शनैर्यष्ट्युत्थानं घनतिमिर-रुद्धे च नयने अहो दुष्टः कायस्तदपि मरणापायचकितः ॥ २८ ॥ अमीषां प्राणानां तुलितबिसिनीपत्रपयसां कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् । यद[10]आढ्यानामग्रे द्रवि-णमद[11]निःसंज्ञमनसां कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ २९ ॥ समारम्भा भग्नाः कति कति न वारांस्तव पशो पिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले । तथापि प्रत्याशा विरमति न ते मूढ शतधा न दीर्णं यच्चेतो नियतम्[12]अशनिग्रावघटितम् ॥ ३० ॥ विवेकव्या-कोशे विकसति शमे शाम्यति तृषा परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः । जरा जीर्णै-श्वर्यग्रसनगहनाक्षेपकृपणस्तृषापात्रं यस्यां भवति मरुताम[13]प्यधिपतिः ॥ ३१ ॥ उत्खातं निधि[14]शङ्कया क्षितितलं ध्माता गिरेर्धातवो निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतो-षिताः । मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः प्राप्तः [15]काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ३२ ॥ निःस्वो [16]वष्टि शतं शती दशशतं लक्षं सहस्राधिपो

---

१ शिरः. २ दन्तः. ३ मुखम्. ४ आश्रय. ५ सूर्यः. ६ मत्स्यः; (पक्षे) मीनराशिः. ७ एडक; (पक्षे) मेषराशिः. ८ वृषभ; (पक्षे) वृषभराशिः. ९ यष्ट्यधीना. १० धनिकानाम्. ११ शून्यमनसाम्. १२ वज्रपाषाणघटितम्. १३ इन्द्र. १४ निक्षेपः. १५ सच्छिद्रकपर्दिका. १६ इच्छति.

लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशतां वाञ्छति । चक्रेशः सुरराजतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णावधिं को गतः ॥ ३३ ॥ माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते । तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ ३४ ॥ दन्तैरुच्चलितं धिया तरलितं पाण्यङ्घ्रिणा कम्पितं दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम् । प्राप्तायां यमभूपतेरिह महाधाव्यां धरायामियं तृष्णा केवलमेकिकैव सुभटी धीरा पुरो नृत्यति ॥ ३५ ॥ भ्रान्तं याचनतत्परेण मनसा देहीति वाक्प्रेरिता भुक्तं मानविवर्जितं परगृहे साशङ्कितं काकवत् । साक्षेपं भृकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रापि सज्जा वयम् ॥ ३६ ॥ भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला । भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ३७ ॥ शान्तेर्मातुर्विवेकात्पितुरपि कृपणं मङ्क्षु कृत्वा पृथक्मामाशा योषा स्वतन्त्रा व्रजति परगृहान्सर्वदा वीतलज्जा । संधत्ते मत्कृशत्वं मम यमनियमौ भ्रातरौ भर्त्सयन्ती पुष्ट्वा चैवात्मबन्धूंस्तदपि पुनर्रहो हन्त वन्ध्यां श्रयामः ॥ ३८ ॥ लज्जे त्वं मज्ज सिन्धौ गिरिवरशिखरे त्वं च तिष्ठ प्रतिष्ठे शान्ते प्रान्ते दिशान्ते कुरु वसतिमहो गर्व खर्वो भवाशु । तेजः पातालमूलं भज भुवि भगवन्मान मा नाम तेऽस्तु प्रेम्णैकामाश्रयन्तीं सततमहमिमां तूर्णमाशां श्रयिष्ये ॥ ३९ ॥

---

## धीरप्रशंसा ।

स एव धन्यो विपदि स्वरूपं यो न मुञ्चति । त्यजत्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥ १ ॥ चलन्ति गिरयः कामं युगान्तपवनाहताः । कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥ २ ॥ कृतं पुरुषशब्देन जातिमात्रावलम्बिना । योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदाहृतः ॥ ३ ॥ असमानमिवौजांसि सहसा गौरवेरितम् । नाम यस्याभिनन्दन्ति द्विषोऽपि स मतः पुमान् ॥ ४ ॥ सह परिजनेन विलसति धीरो गहनानि तरति पुनरेकः । विषमेकेन निपीतं त्रिपुरजिता सह सुरैरमृतम् ॥ ५ ॥ श्लाघ्या महतामुन्नतिरद्भुतमध्यवसितं च धीराणाम् । कनकगिरिरनभिलङ्घ्यो रविरनिशमनुज्झितारम्भः ॥ ६ ॥ अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् । वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥ ७ ॥

---

१ पृथ्वी. २ तवानुबन्ध कुर्वतेत्यर्थः. ३ मुकुलितम्. ४ शीघ्रम्. ५ गतलज्जा. निर्लज्जेत्यर्थः. ६ अहो इत्याश्चर्ये. ७ दुस्तराणि. ८ शंकरेण. ९ व्यापारः. १० अजिरम्. ११ कृत्रिमसरित्.

कदर्थितस्यापि[1] हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्[2] । अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा यान्ति कदाचिदेव ॥ ८ ॥ अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवास्तु तथापि धीराः । निजप्रतिज्ञामधिरुह्यमाना महोद्यमाः कर्म समारभन्ते ॥ ९ ॥ रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् । सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ १० ॥ निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् । अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात्[3]पथः[4] प्रविचलन्ति पदं न धीराः ॥ ११ ॥ कान्ताकटाक्षविशिखा[5] न लुनन्ति[6] यस्य चित्तं न निर्दहति कोपकृशानुतापः[7] । कर्षन्ति भूरि विषयांश्च न लोभपाशा लोकत्रयं जयति कृत्स्नमिदं[8] स धीरः ॥ १२ ॥ आपत्समुद्धरणधीरधियः परेषां जाता महत्यपि कुले न भवन्ति सर्वे । विन्ध्याटवीषु विरलाः खलु पादपास्ते ये दन्तिदन्तमुसलोल्लिखनं सहन्ते ॥ १३ ॥ विरम विरसायासादस्माद्दुरध्यवसायतो विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे । अयि जड विधे कल्पापायव्यपेतनिजक्रमाः कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ १४ ॥

---

## वीरप्रशंसा ।

एकेनापि हि शूरेण पदाक्रान्तं महीतलम् । क्रियते भास्करेणेव स्फारस्फुरिततेजसा ॥ १ ॥ स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् । विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ २ ॥ विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं समायुक्तोऽप्यर्थैः परिभवपदं[9] याति कृपणः । स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां द्युतिं[10] सैंहीं[11] किं श्वा धृतकनकमालोऽपि[12] लभते ॥ ३ ॥ को वीरस्य मनस्विनः स्वविषयः को वा विदेशैस्तथा[13] यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् । यद्दंष्ट्रानखलाङ्गलप्रहरणः[14] सिंहो वनं गाहते[15] तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ ४ ॥

---

## तेजस्विप्रशंसा ।

बालस्यापि रवेः पादाः[16] पतन्त्युपरि भूभृताम्[17] । तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ १ ॥ एकः स एव तेजस्वी सैंहिकेयः[18] सुरद्विषाम् । शिरोमात्रावशेषेण जीयन्ते येन शात्रवः ॥ २ ॥ मौनी पादप्रहारेऽपि न क्षमी नीच एव सः । आकृष्टशस्त्रो मित्रेऽपि न तेज-

---

१ दरिद्रस्य. २ दूरीकर्तुम्. ३ न्यायादनपेतात्. ४ मार्गात्. ५ कटाक्षा एव विशिखा बाणाः. ६ न छिन्दन्ति. ७ कोपः क्रोधः स एव कृशानुरग्निस्तत्तापः. ८ संपूर्णम्. ९ पराजयस्थानम्. १० कान्तिम्. ११ सिंहसंबन्धिनीम्. १२ धृता कनकस्य सुवर्णस्य माला येन. १३ परदेशैः. १४ दंष्ट्रा नखलाङ्गलाश्च प्रहरणं यस्य. नखा एव लाङ्गलानि विदारकत्वात् हलानि इति रूपकम्. 'पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः' इति कस्यचित्प्रयोगः. १५ प्रविशति. १६ किरणाः; (पक्षे) चरणाः. १७ पर्वतानाम्; (पक्षे) राज्ञाम्. १८ राहुः.

स्वी खलो हि सः ॥ ३ ॥ तुल्येऽपराधे स्वर्भानु[1]र्भानुमन्तं[2] चिरेण यत् । हिमांशु[3]माशु ग्रसते तन्म्रदिम्नः[4] स्फुटं फलम् ॥ ४ ॥ स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि । निदर्शन[5]मसाराणां[6] लघुर्[7]बहुतृणं[8] नरः ॥ ५ ॥ तेजस्विमध्ये तेजस्वी दवीयानपि[9] गण्यते । पञ्चमः पञ्चतप[10]सस्तपनो जातवेदसाम् ॥ ६ ॥ अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् । कथंकार[11]मनालम्बा[12] कीर्तिर्द्यामधिरोहति ॥ ७ ॥ अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुरक्षिप्त[13]मृगयूथो मृगाधिपः ॥ ८ ॥ तेजस्विनि क्षमासारे नातिकार्कश्यमाचरेत् । अतिनिर्मथनादग्निश्चन्दनादपि जायते ॥ ९ ॥ तेजोहीने महीपाले स्वे परे च विकुर्वते । निःशङ्को हि जनो धत्ते पदं भस्मन्यनूष्मणि[14] ॥ १० ॥ एकचक्रो रथो यन्ता[15] विकलो[16] विषमा हयाः[17] । आक्रमत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ ११ ॥ साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते । तस्य धीशालिनः कोऽन्यः सहेताराळितां भ्रुवम् ॥ १२ ॥ सिंहः शिशुरपि निपतति मदमलिनकपोल[18]भित्तिषु गजेषु । प्रकृतिरियं सत्त्ववतां[19] न खलु वयस्तेजसो हेतुः ॥ १३ ॥ यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः[20] । तत्तेजस्वी पुरुषः परकृतविकृतिं[21] कथं सहते ॥ १४ ॥ दर्शितते[22]पोच्छ्रायै[23]स्तेजोवद्भिः[24] सुगोत्र[25]संजातैः । हीरैरप्स्विव धीरैरापत्स्वपि गम्यते नाधः ॥ १५ ॥ दीप्यन्तां ये दीप्त्यै घटिता[26] मणयश्च वीरपुरुषाश्च । तेजः स्वविनाशाय तु भवति तृणानामिव लघूनाम् ॥ १६ ॥ मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयंहतैः । लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ १७ ॥ तीव्रोष्णदुर्विषयवीर्यभृतः परेषां तेजस्विनो न गणयन्ति वपुर्महत्त्वम् । यत्पद्मरागशकलाकृतिरद्रितुङ्गं कात्स्न्र्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥ १८ ॥ न तेजस्तेजस्वी प्रसृत[27]मपरेषां प्रसहते स तस्य स्वो भावः प्रकृति[28]नियतत्वा[29]दकृतकः । मयूखै[30]रश्रान्तं[31] तपति यदि देवो दिनकरः किमाग्नेयग्रावा[32] निकृत[33] इव तेजांसि वमति ॥ १९ ॥ हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रं पविः[34] । दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमस्तेजो यस्य विराजते स बलवान्स्थूलेषु कः प्रत्ययः[35] ॥ २० ॥ स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधः शान्तये । सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं

---

१ राहुः. २ सूर्यम्. ३ चन्द्रम्. ४ मार्दवस्य. ५ दृष्टान्तः. ६ दुर्बलानाम्. ७ निष्पौरुषः. ८ तृणकल्पमित्यर्थः. ९ दूरस्थोऽपि. १० पञ्चाग्निसाध्यं तपो यस्य. ११ कथमित्यर्थः. १२ निराधारा. १३ हतः. १४ ऊष्मरहिते. १५ सारथिः. १६ अरुणः. १७ तुरगाः. १८ प्रशस्तकपोलेषु. १९ बलवताम्. २० सूर्यकान्तः २१ विकार. २२ कान्ति; (पक्षे) प्रताप. २३ कान्त्याधिक्यम्; (पक्षे) धनुष औन्नत्यम्. २४ प्रकाशकत्वम्; (पक्षे) सामर्थ्यम्. २५ पर्वत; (पक्षे) कुलम्. २६ विधातृनिष्पादिताः. २७ विस्तृतम्. २८ स्वभावाधीनत्वात्. २९ अकृत्रिमः. ३० किरणैः. ३१ संततम्. ३२ सूर्यकान्तः. ३३ धिकृत इव. ३४ वज्रम्. ३५ विश्वासः.

सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं[1] फलम् ॥ २१ ॥ शमयति गजानन्यान्गन्धद्विपः कलभोऽपि सन्भवति सुतरां वेगोदग्रं भुजंगशिशोर्विषम् । भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं न खलु वयसा जात्यैवायं स्वकार्यसहो भरः ॥ २२ ॥

## मनस्विप्रशंसा ।

कामं[2] प्रियानपि प्राणान्विमुञ्चन्ति मनस्विनः । इच्छन्ति न त्वमित्रेभ्यो महतीमपि सत्क्रियाम् ॥ १ ॥ ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी । अङ्गुलीदर्शनाद्येन विलीयन्ते मनस्विनः ॥ २ ॥ ब्रह्माण्डमण्डलीमात्रं किं लोभाय मनस्विनः । शफरीस्फुरितेनाब्धेः[3] क्षुब्धता जातु[4] जायते ॥ ३ ॥ कुसुमस्तबकस्येव[5] द्वे वृत्ती स्तो मनस्विनः । मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ ४ ॥ पादाहतं यदुत्थाय मूर्धानमधिरोहति । स्वस्थादेवापमानेऽपि[6] देहिनस्तद्वरं[7] रजः ॥ ५ ॥ समूलघातमघ्नन्तः[8] परान्नो[9] घ्नन्ति मानिनः । प्रध्वंसितान्धतमसस्तत्रोदाहरणं[10] रविः ॥ ६ ॥ स पुमानर्थवज्जन्मा[11] यस्य नाम्नि पुरःस्थिते । नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः[12] ॥ ७ ॥ स्थित्यतिक्रान्तिभीरूणि[13] स्वच्छान्याकुलितान्यपि[14] । तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ८ ॥ शक्तिवैकल्यनम्रस्य[15][16] निःसारत्वाल्लघीयसः[17][18] । जन्मिनो[19] मानहीनस्य तृणस्य च समा गतिः ॥ ९ ॥ अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम् । प्रियतां ज्यायसीं मा गान्महतां केन तुङ्गता ॥ १० ॥ तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः । पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ११ ॥ दुरासदवनज्यायान्गम्यस्तुङ्गोऽपि भूधरः । न जहाति महौजस्कं[20] मानप्रांशुमलङ्घ्यता[21] ॥ १२ ॥ गुरून्कुर्वन्ति ते वंश्यानन्वर्था तैर्वसुंधरा । येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ १३ ॥ उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् । शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥ १४ ॥ तुङ्गत्वमितरा[22] नाद्रौ नेदं[23] सिन्धावगाधता । अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ १५ ॥ न क्वचिच्च बहिर्यान्ति मानिनां प्रार्थनागिरः । यदि निर्यातुमिच्छन्ति तदा प्राणपुरःसराः ॥ १६ ॥ असेवितेश्वरद्वारमदृष्टविरहव्यथम् । अनुक्तक्लीबवचनं धन्यं कस्यापि जीवितम् ॥ १७ ॥ मानिनो हतमानस्य मानोऽपि न सुखप्रदः । जीवनं मानमूलं हि माने म्लाने कुतः सुखम् ॥ १८ ॥ मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति । अपि निर्वाणमायाति नानलो याति शीतताम् ॥ १९ ॥ मन-

१ बलानुरूपम्. २ यथेच्छम्. ३ मत्स्यीस्फुरणेन. ४ कदाचित्. ५ गुच्छस्य. ६ संतुष्टात्. ७ चेतनात्. ८ अनुन्मूलयन्तः. ९ शत्रून्. १० गाढं तमः. ११ सार्थकजन्मा. १२ पुरुषगणनाप्रस्तावे. १३ मर्यादोल्लङ्घनाद्धेतोर्भीरूणि. १४ संक्षोभितानि. १५ उत्साहादिशक्तिवैधुर्येण; (पक्षे) अवष्टम्भसामर्थ्यविरहेण. १६ प्रह्वीभूतस्य; (पक्षे) विधेयभूतस्य. १७ दुर्बलत्वात्; (पक्षे) स्थिरांशरहितत्वात्. १८ गौरवहीनस्य; (पक्षे) नीरसस्य. १९ जन्तोः. २० प्रतापसंपन्नम्. २१ मानोन्नतपुरुषम्. २२ अगाधता. २३ तुङ्गत्वम्.

स्विद्धृदयं धत्ते रोषेणैव प्रसन्नताम् । भस्मना मुकुरः प्रायः प्रसादं लभतेतराम् ॥ २० ॥ मनस्विनो न मन्यन्ते परतः प्राप्य जीवनम् । बलिभुग्भ्यो न काकेभ्यः स्पृहयन्ति हि कोकिलाः ॥ २१ ॥ दूर्वाङ्कुरतृणाहारा धन्यास्तात वने मृगाः । विभवोन्मत्तचित्तानां न पश्यन्ति मुखानि यत् ॥ २२ ॥ सुखं जीवन्ति हरिणा वनेष्वपरसेविनः । अर्थैरयत्नसुलभैर्जलदर्भाङ्कुरादिभिः ॥ २३ ॥ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन । धनिषु न दैन्यं विदधति ते किल पशवो वयं सुधियः ॥ २४ ॥ प्रत्युपकुर्वन्बह्वपि न भवति पूर्वोपकारिणा तुल्यः । एकोऽनुकरोति कृतं निष्कारणमेव यत्परः कुरुते ॥ २५ ॥ न नटा न विटा न गायका न परद्रोहनिबद्धबुद्धयः । नृपसद्मनि नाम के वयं स्तनभारानमिता न योषितः ॥ २६ ॥ अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः । अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ २७ ॥ ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः । अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ २८ ॥ पुरो वा पश्चाद्वा वयमुपविशामः क्षितिभुजां ततः किं नश्छिन्नं वचनरचनाक्रीतजगताम् । अगारे कान्तारे कुचकलशभारे मृगदृशां मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ॥ २९ ॥ अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम् । तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो विपादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ३० ॥ क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाखाहारी क्वचिदपि च शाल्योदनरुचिः । क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ३१ ॥ स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं कपालं यस्योच्चैर्विनिहितमलंकारविधये । नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ३२ ॥ विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा । इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ ३३ ॥ वरमहिमुखे क्रोधाध्माते करो विनिवेशितो विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने । गिरिवरतटीमुक्तश्चात्मा वरं शतधा कृतो न तु खलजनावाप्तैरर्थैः कृतं हितमात्मनः ॥ ३४ ॥ नानीयन्ते मधुनि मधुपाः पारिजातप्ररोहैर्नाभ्यर्थ्यन्ते तुहिनरुचिना चन्द्रिकायां चकोराः । अस्मद्वाचां धुरि मधुरिमा यद्यपूर्वावतारः सोल्लासाः स्युः स्वयमिह बुधाः किं मुधाभ्यर्थनाभिः ॥ ३५ ॥ मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणूरङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते । तद्दद्युर्ददतेऽथवा न किमपि क्षुद्रा दरिद्रा भृशं धिग्धिक्तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योऽपि ये ॥ ३६ ॥ त्वं चेन्नीचजनानुरागरभसादस्मासु मन्दादरः का नो मानद मानहानिरियती भूः किं त्वमेकः प्रभुः । गुञ्जापुञ्जपरम्परापरिचयाद्भिल्लीजनैरुज्झितं मुक्तादाम न धारयन्ति

---

१ प्रत्युपकार कुर्वन्. २ अनुकरण करोति. ३ सर्पमुखे. ४ क्रोधपूर्णे. ५ कालगृहे.

किमहो कण्ठे कुरङ्गीदृशः ॥ ३७ ॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः। इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ३८ ॥ ब्रह्माण्डं कियदस्ति तत्र वसुधापिण्डं किमाचक्ष्महे तत्राप्येकतरं तु खण्डममितास्तस्मिन्नृपाः केचन। तेभ्यो दैन्यशतोपनीतविभवा दृष्टानुकम्पास्तु ते धिङ्मूढान्स्पृहयन्ति हन्त किमपि स्वार्थो न तेभ्योऽपि ये ॥ ३९ ॥ पातालान्न विमोचितो बत बली नीतो न मृत्युः क्षयं नोन्मृष्टं शशिलाञ्छनं सुमलिनं नोन्मूलिता व्याधयः। शेषस्यापि भरं विधूत्य न कृतो भारावतारः क्षणं चेतः सत्पुरुषाभिमानमनिशं मिथ्या वहन्खिद्यसे ॥ ४० ॥ नास्माकं शिबिका न चास्ति कटकाद्यालंक्रियासत्क्रिया नोत्तुङ्गस्तुरगो न कश्चिदनुगो नाप्यम्बरं सुन्दरम्। किं तु क्ष्मातलवर्त्यशेषविदुषां साहित्यविद्याजुषां चेतस्तोषकरी शिरोनतिकरी विद्यानवद्यास्ति नः ॥४१॥ लक्ष्मीर्निर्वृतिमेति हीनचरितैर्यैरेव तच्छिक्षया किं नाद्यैव करोमि तामनुचरीं रामां सकामामिव। ब्रह्माण्डे निपतत्यपि स्खलति न प्रायेण येषां मनस्तेषामार्यमनस्विनामनुपदं गन्तास्मि नाहं यदि ॥ ४२ ॥ पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं[1] कपालीमादाय[2] न्यायगर्भद्विजवरहुतभुग्धूमधूम्रोपकण्ठम्। द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो मानी प्राणी प्रवृत्तो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ ४३ ॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः। सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न चेत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥ ४४ ॥ श्रेयस्वी यत्र मानं व्रजति दुरितकृच्चापमानं मनुष्यैरज्ञेयं यत्र दूतैः प्रभुमनु मनुजो नीयते चानपेक्षः। मृत्योर्गेहं वरं तन्न तु कुधनवतां यत्र सर्वापमानो लोकैर्विज्ञायमानः स्वयमतिथितया यत्र चार्थी प्रयाति ॥ ४५ ॥

---

## अपौरुषत्वनिन्दा।

मा जीवन्यः[3] परावज्ञादुःखदग्धोऽपि[4] जीवति। तस्याजननिरेवास्तु[5] जननीक्लेशकारिणः ॥ १ ॥ असंपादयतः कंचिदर्थं जातिक्रियागुणैः[6][7][8]। यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ २ ॥

---

## गुणप्रशंसा।

गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम्। केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः[9]

१ शुभ्रवस्त्रेण पिहिता पाली यस्याः. २ भिक्षापात्रम्. ३ गर्हितं जीवतीति माजीवन्. ४ परैः कृता यावज्ञा तदेव दुःख तेन दग्धः खिन्नः. ५ अनुत्पत्ति. ६ ब्राह्मणत्वादिः. ७ इज्याध्ययनादि.. ८ शौर्यादिः. ९ भ्रमरा..

॥ १ ॥ गुणवज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् । पुष्पमालाप्रसङ्गेन सूत्रं शिरसि धार्यते ॥ २ ॥ कलावतः सैव कला ययाधःक्रियते भवः । बह्वीभिश्च कलाभिः किं याभिरङ्कः प्रदर्श्यते ॥ ३ ॥ न पुत्रत्वेन पूज्यन्ते गुणैरासाद्यते पदम् । रवेर्व्यापारमादत्ते प्रदीपो न पुनः शशी ॥ ४ ॥ गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः । वासुदेवं नमस्यन्ति वसुदेवं न ते जनाः ॥ ५ ॥ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । नहि कस्तूरिकामोदः शपथेन निवार्यते ॥ ६ ॥ किमाढ्यत्वगुरुत्वाभ्यां चरमोऽपि गुणैर्गुरुः । केतकीकुसुमे पश्य लघुपत्रेऽतिगौरवम् ॥ ७ ॥ केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते । दोषाः किं नाम कुर्वन्ति गुणापहृतचेतसः ॥ ८ ॥ शरीरस्य गुणानां च दूरमत्यन्तमन्तरम् । शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ९ ॥ गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ १० ॥ गुणैः सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः । अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते ॥ ११ ॥ गुणेषु क्रियतां यत्नः किमाटोपैः प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ १२ ॥ गुणैर्गौरवमायाति न महत्यापि संपदा । पूर्णेन्दुर्न तथा वन्द्यो निष्कलङ्को यथा कृशः ॥ १३ ॥ स्वयं स्वगुणविस्तारादूर्णनाभः पतत्यधः । तमेव संहरन्भूयः पदमुच्चैर्विगाहते ॥ १४ ॥ गुणो दूषणतां याति दूषणं गुणतां क्वचित् । यथा हि नम्रता दोषः स्तनयोः स्तब्धता गुणः ॥ १५ ॥ गुणैर्गौरवमायाति नोच्चैरासनमास्थितः । प्रासादशिखरस्थोऽपि काकः किं गरुडायते ॥ १६ ॥ अहो गुणानां प्राप्त्यर्थं यतन्ते बहुधा नराः । मुक्ता यदर्थं भग्नास्या इतरेषां च का कथा ॥ १७ ॥ गुणेन स्पृहणीयः स्यान्न रूपेण युतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि क्वचित् ॥ १८ ॥ प्रभुभिः पूज्यते लोके कलैव न कुलीनता । कलावान्मान्यते मूर्ध्नि सत्सु देवेषु शंभुना ॥ १९ ॥ गुणयुक्तोऽपि पूर्णोऽपि कुम्भः कूपे निमज्जति । तस्य भारसहो नास्ति गुणकग्राहको यदि ॥ २० ॥ अहो वैचित्र्यमेतस्य संसारस्य किमुच्यते । गुणोऽपि क्लेशहेतुः स्याद्विश्रान्तः कण्ठकन्दले ॥ २१ ॥ जात्युत्कृष्टस्य हि मणेर्नोचितं शाणघर्षणम् । आदर्शे चित्रकारैः किं लिख्यते प्रतिबिम्बितम् ॥ २२ ॥ गुणयुक्तोऽप्यधो याति रिक्तैः कूपे यथा घटः । निर्गुणोऽपि भृतैः पश्य जनैः शिरसि धार्यते ॥ २३ ॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । सगुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥ २४ ॥ गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे । स्वभावरम्यं लावण्यं तारुण्येन मनोहरम् ॥ २५ ॥ गुणैः पूजा भवेत्पुंसां नैकस्माज्जायते कुलात् । चूडारत्नं शशी शंभोर्यानमुच्चैःश्रवा हरेः ॥ २६ ॥

१ चन्द्रस्य, (पक्षे) विदुषः. २ षोडशो भागः; (पक्षे) चतुःषष्टिकलानामन्यतमा. ३ अधोभागे क्रियते; (पक्षे) तिरस्क्रियते. ४ शिवः; (पक्षे) संसारः ५ कलङ्कः; (पक्षे) दोषः. ६ गुणाकृष्टान्तःकरणस्य. ७ शिवतुल्यः. ८ दुःख प्राप्नोति. ९ अमूल्यम्. १० आडम्बरैः. ११ राजभवनम्. १२ मौक्तिकानि, (पक्षे) मोक्षमापन्नाः. १३ रज्जुयुक्तः; (पक्षे) विनयादिगुणसपन्नः. १४ रिक्तः; (पक्षे) निर्द्रव्यः. १५ पूर्णः.

सर्वत्र गुणवानेव चकास्ति प्रथितो नरः। मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते ॥ २७॥ गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित्। स्फाटिकं भाजनं भग्नं काकिन्यापि न गृह्यते ॥ २८॥ गुण[1] आकर्षणयोग्यो धनुष इवैकोऽपि लक्षलाभाय[2]। लूता तन्तुभिरव किं गुणैर्विमर्दासहैर्बहुभिः[3] ॥ २९॥ अनवसरे गुणवानपि हृदयादवतार्यते स्त्रिया हारः। पश्य शलाकावसरे तृणाय भूपैः प्रसार्यते स्वकरः ॥ ३०॥ गुणवन्तः क्लिश्यन्ते[4] प्रायेण भवन्ति निर्गुणाः सुखिनः। बन्धनमायान्ति शुका यथेष्टसंचारिणः काकाः ॥ ३१॥ गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः। अलिरेति[5] वनात्पद्मं न दर्दुरस्त्वेकवासोऽपि[6] ॥ ३२॥ अवलम्बितविष्णुपदः कर्षितजनचक्षुरतुलगतिः। पत्रमयोऽपि पदार्थः पतङ्गतामेति[7] गुणयोगात् ॥ ३३॥ अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति। निखिलरसायनमहितो गन्धेनोग्रेण लशुन इव ॥ ३४॥ दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते। प्रीत्यैव शशिनि पतितं पश्यति लोकः कलङ्कमपि ॥ ३५॥ अन्तर्गतैर्गुणैः किं द्वित्रा अपि यत्र साक्षिणो विरलाः। स गुणो गीतेर्यदसौ वनेचरं हरिणमपि हरति ॥ ३६॥ गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः। सुस्वादुतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥ ३७॥ गुणेषु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतमं गुणानाम्। गुणप्रकर्षादुडुपेन[8] शंभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ ३८॥ निष्कलङ्ककलयापि[9] जनो यः संयुतः स खलु पूज्यते जनैः। भद्र पश्य जडजोऽपि धार्यते शंकरेण शिरसा निशाकरः ॥ ३९॥ वक्रोऽपि पङ्कजनितोऽपि दुरासदोऽपि[10] व्यालाश्रितोऽपि विफलोऽपि सकण्टकोऽपि। गन्धेन बन्धुरसि केतक पुष्पजेन ह्येको गुणः खलु निहन्ति समस्तदोषान् ॥ ४०॥ न खनति खुरैः क्षोणीपृष्ठं न नर्दति सादरं प्रकृतिपुरुषं प्रेक्ष्याप्यग्रे न कुप्यति गोवरः। वहति च धुरं धुर्यो धैर्यादनुद्धतकन्धरो जगति गुणिनः कार्यौदार्यात्परानतिशेरते ॥ ४१॥ गुणानामज्ञाता प्रचुरधनदातापि न मुदे मुदे विद्याज्ञाता भवति मितदातापि गुणिनाम्। दृशौ ग्राम्या दत्ते न पुनरवधत्ते च चतुरो दृशः प्रान्तं दत्त्वा वशयति नितान्तं पुरवधूः ॥ ४२॥ उपादाता यावन्न भवति गुणानां गुणवतामसत्कल्पास्तावत्त्रिभुवनमहार्घा अपि गुणाः। अपि प्राग्दैत्यारेर्हृदयवसतेः कौस्तुभमणिः स किं नासीदब्धौ श्रुतिरपि न यस्य क्वचिदभूत् ॥ ४३॥ विवादप्रारम्भः प्रथयति परं दम्भमतुलं गुणानां गाम्भीर्ये तव भवति साक्षी कलकलः। पयःपूर्णः कुम्भो ध्वनति न तथा वातवलितो यथा रिक्तो भांभांध्वनिमनिभृतं मुञ्चति मुहुः ॥ ४४॥ कौशेयं कृमिजं सुवर्णमुपलादिन्दीवरं[12][13] गोमया-

---

१ विचारक्षमः; (पक्षे) यथाश्रुतम्. २ लक्षसंख्याकधनलाभाय; (पक्षे) वेध्यलाभाय. ३ विचारासहैः; (पक्षे) आकर्षणासहैः. ४ क्लेशं प्राप्नुवन्ति. ५ भ्रमरः. ६ भेकः. ७ पतङ्गः सूर्यः; (पक्षे) पत्र(कागद)निर्मित सूत्रनिबद्धः क्रीडार्थं गगने उड्डाय्यते. पतङ्ग इति नाम्नैव देशभाषायां प्रसिद्धः. ८ पूज्यः. ९ चन्द्रेण. १० निर्मलविद्यया. ११ दुष्प्रापः. १२ पाषाणात् १३ नीलं कमलम्.

त्पङ्कात्तामरसं शशाङ्क उदधेर्गोपित्ततो रोचना । काष्ठादग्निरहेः फणादपि मणिर्दूर्वापि गोरोमतः प्राकाश्यं स्वगुणोदयेन गुणिनो यास्यन्ति किं जन्मना ॥ ४९ ॥

## उद्यमप्रशंसा ।

उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् । जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ १ ॥ उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षडेते यत्र वर्तन्ते तत्र देवः सहायकृत् ॥ २ ॥ उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः । नहि सिंहस्य सुप्तस्य प्रविशन्ति मुखे गजाः ॥ ३ ॥ न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ ४ ॥ विहाय पौरुषं यो हि दैवमेवावलम्बते । प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ५ ॥ पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते । तस्मात्पुरुषकारेण विना दैवं न सिध्यति ॥ ६ ॥ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ७ ॥ यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति । एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ ८ ॥ निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ॥ ९ ॥ दैवं पुरुषकारेण साध्यसिद्धिनिबन्धनम् । योऽतिक्रमितुमिच्छेत स लोके नावसीदति ॥ १० ॥ योजनानां सहस्रं तु शनैर्गच्छेत्पिपीलिका । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ ११ ॥ कामपि श्रियमासाद्य यस्तद्वृद्धौ न चेष्टते । तस्यायतिषु न श्रेयो बीजभोजिकुटुम्बवत् ॥ १२ ॥ उद्योगिनः करालम्बं करोति कमलालया । अनुद्योगिकरालम्बं करोति कमलाग्रजा ॥ १३ ॥ काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः । न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ १४ ॥ आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वायं नावसीदति ॥ १५ ॥ संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः । कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ १६ ॥ न लभन्ते विनोद्योगं जन्तवः संपदां पदम् । सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥ १७ ॥ पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥ १८ ॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं प्रधानमिति कापुरुषा वदन्ति । दैवं विहाय कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ १९ ॥

---

१ कर्दमात्. २ रक्तकमलम्. ३ गोरोचनम्. ४ आश्रयति. ५ प्रासादे देवालयशिखरे यः सिंहस्तद्वत्. ६ साध्यसिद्ध्यधीन तदायत्तमित्यर्थः. ७ उल्लङ्घयितुम्. ८ व्यापारं न करोति. ९ उत्तरकालेषु. १० कल्याणम्. ११ लक्ष्मीः. १२ अलक्ष्मीः. १३ काकागमनमिव तालपतनमिव काकतालीय तद्वत्. अवितर्कितम्. अकस्मादिति यावत्. १४ खिन्नो न भवति. १५ पुरुषश्रेष्ठम्. १६ कुत्सितपुरुषाः.

## संहतिप्रशंसा ।

संहतिः[1] श्रेयसी पुंसां स्वकुलैरल्पकैरपि । तुषेणापि[2] परित्यक्ता न प्ररोहन्ति[3] तण्डुलाः ॥ १ ॥ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्[4]बध्यन्ते मत्तदन्तिनः ॥२॥ बहूनामल्पसाराणां समवायो दुरत्ययः । तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः ॥३॥

## क्षमाप्रशंसा ।

क्षमा[5] शस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥१॥ नरस्याभरणं रूपं रूपस्याभरणं गुणः । गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ २ ॥ क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किं न सिद्ध्यति ॥३॥

## विनयप्रशंसा ।

तिष्ठतां[6] तपसि पुण्यमासृजन्[7]संपदोऽनुगुणयन्[8]सुखैषिणाम्[9] । योगिनां परिणमन्[10]विमुक्तये केन नास्तु विनयः सतां प्रियः ॥ १ ॥

## सत्यप्रशंसा ।

सूनृतं सर्वशास्त्रार्थनिश्चितज्ञानशोभितम् । भूषणं सर्ववचसां लज्जेव कुलयोषिताम् ॥ १ ॥ अश्वमेधसहस्रं च सत्यं च तुलया धृतम् । अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ २ ॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः । अलुब्धैर्दानशूरैश्च सप्तभिर्धार्यते मही ॥ ३ ॥

## असत्यनिन्दा ।

नासत्यवादिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं कालकूटमिवा[11]श्नतः[12] ॥ १ ॥ असत्यम[13]प्रत्ययमूलकारणं कुवासनासद्मसमृद्धिवारणम् । विपन्निदानं[14] परवञ्चनोर्जितं कृतापराधं कृतिभिर्[15]विवर्जितम् ॥ २ ॥ यशो यस्माद्भस्मीभवति वनवह्नेरिव[16] वनं निदानं[17] दुःखानां यद्[18]वनिरुहाणामिव जलम् । न यत्र स्याच्छायातप इव तपःसंयमकथा कथंचित्तन्मिथ्यावचनमभिधत्ते[19] न मतिमान् ॥ ३ ॥ जिह्वैकेव सतामुभे फणवतां[20] स्रष्टुश्[21]चतस्रश्च तास्ताः सप्तैव विभावसोर्[22]नियमिताः षट्कार्तिकेयस्य च । पौलस्त्यस्य[23] दशाभवन्फणिपतेर्[24]जिह्वासहस्रद्वयं जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥ ४ ॥

---

१ संघातः. २ धान्यत्वक्. ३ अङ्कुरजननक्षमा न भवन्तीति भावः. ४ रज्जुत्वम्. ५ शान्तिः. ६ तपोनिष्ठानाम्. ७ संपादयन्. ८ अनुकूलयन्. ९ सपद्यमानः. १० अपवर्गाय. ११ विषम्. १२ भक्षयतः. १३ अविश्वासः. १४ विपत्तेः कारणम्. १५ कुशलैः. १६ दावाग्नेः. १७ आदिकारणम्. १८ वृक्षाणाम्. १९ वक्ति. २० सर्पाणाम्. २१ ब्रह्मणः. २२ अग्नेः. २३ रावणस्य. २४ शेषस्य.

## आत्मश्लाघानिन्दा ।

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् । इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥ १ ॥ न सुखं न च सौभाग्यं स्वयं स्वगुणवर्णने । यथैव च पुरंध्रीणां स्वहस्तकुचमर्दने ॥ २ ॥ स्वयं तथा न कर्तव्यं स्वगुणाख्यापनं पुनः । स्वगुणाख्यापनं युक्त्या परद्वारा प्रयोजयेत् ॥ ३ ॥ न सौख्यसौभाग्यकरा गुणा नृणां स्वयं गृहीताः सुदृशां स्तना इव । परैर्गृहीता द्वितयं वितन्वते न तेन गृह्णन्ति निजं गुणं बुधाः ॥ ४ ॥ निजगुणगरिमा सुखाकरः स्यात्स्वयमनुवर्णयतां सतां न तावत् । निजकरकमलेन कामिनीनां कुचकलशाकलनेन को विनोदः ॥ ५ ॥

---

## स्वभाववर्णनम् ।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः । [1]अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १ ॥ किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् । भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ २ ॥ यः स्वभावो हि यस्यास्ते स नित्यं दुरतिक्रमः । श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ ३ ॥ परोपदेशकुशला दृश्यन्ते बहवो जनाः । स्वभावमतिवर्तन्तः सहस्रेष्वपि दुर्लभाः ॥ ४ ॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ५ ॥ सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा । यौवने सदलंकाराः शोभां बिभ्रति सुभ्रुवः ॥ ६ ॥ रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ ७ ॥ वचो हि सत्यं परमं विभूषणं यथाङ्गनायाः कृशता कटौ तथा । द्विजस्य विद्यैव पुनस्तथा क्षमा शीलं हि सर्वस्य नरस्य भूषणम् ॥ ८ ॥ न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः । स्वभाव एवात्र [2]तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ ९ ॥ [3]निम्नोन्नतं वक्ष्यति को जलानां विचित्रभावं मृगपक्षिणां च । माधुर्यमिक्षौ [4]कटुतां च निम्बे स्वभावतः सर्वमिदं हि सिद्धम् ॥ १० ॥ वह्निस्तस्य जलायते जलनिधिः [5]कुल्यायते तत्क्षणान्मेरुः स्वल्पशिलायते मृगपतेः संद्यः कुरंगायते । [6]व्यालो [7]माल्यगुणायते विषरसः [8]पीयूषवर्षायते यस्याङ्गेऽखिललोकवल्लभतमं शीलं [9]समुन्मीलति ॥ ११ ॥ ऐश्वर्यस्य विभूषणं [10]सुजनता शौर्यस्य [11]वाक्संयमो ज्ञानस्यो[12]पशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा बलवतां धर्मस्य [13]निर्व्याजता सर्वेषामपि सर्वकारणमिदं [14]शीलं परं भूषणम् ॥ १२ ॥ काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके मूर्खः पण्डितसंगमे न रमते

---

१ अतिक्रम्य. २ अतिक्रम्य वर्तते. ३ नीचोच्चम्. ४ तीक्ष्णताम्. ५ कृत्रिमसरिदिवाचरति. ६ सर्पः. ७ माला. ८ अमृतम्. ९ विजृम्भते. १० सौजन्यम्. ११ वाङ्नियमनम्. १२ शान्तिः. १३ निष्कपटत्वम्. १४ सुस्वभावः.

